विश्वनाथो विजयते।

# शक्तिवादः

महामहोपाध्यायश्रीयुतगदाधरभट्टाचार्य्यप्रणीतः

श्रीयुततारकिशोरीमणिमाधवप्रणीत-

टीकासमलंकृतः।

पुण्यपत्तनस्थराजकीयप्रधानपाठशालाध्यापक

भारद्वाजगोविन्दशास्त्रिणा

संशोधितः।

श्रीयुत बाबू पविनाशीलाल की आज्ञानुसार

पंडित हरिशंकर ने काशी आर्य्ययंत्रालय मे

मुद्रित किया।



सन १८८६

॥ श्रीगणेशाय नमः ॥

# ॥ माधव्युपेतःशक्तिवादः ॥

:—:*:*:—:

सङ्केतोलक्षणाचार्थेपदवृत्तिः ।

---

॥श्रीः॥ आराध्ययाङ्गिरसुतांवरदांसुधीरैर्लब्धम्फलंसमधिकंप्र-
तैरभीष्टम् । संसारसागरतरिंभजनैकपात्रींदुर्गांनमामि
भवभीतिविनाशनाय ॥ १ ॥ ख्यातःपूर्णकुलानांवैन्दसहस्रीय-
स्वकपाणिष्वयंतद्वंश्योनरराजभैरवमहावेगान्यथाकारकः । यो-
राजेन्द्रकृतौतदीयकुलजोविख्यातविश्वेश्वरस्तत्पुत्रोऽहमिमां
करोमिविवृतिंश्रीमाधवस्तार्किकः ॥ २ ॥ टीकांविज्ञजनप्रमोद-
जननींसिद्धान्तसिद्धांशुभांश्रीमन्माधवनामकेनरचितांयत्नेनधी-
भिश्शुभैः ॥ काषायैःपरिमृज्यचित्ततरणिंसंहृत्यपारंपरंधीरागः
च्छतुसत्पदार्थकुतुकीमच्छक्तिवादार्णवे॥ ३ ॥ शिष्यजिज्ञासयावृ-
त्तिम्विभजते ॥ सङ्केतइति । अर्थे,ऽर्थनिष्ठा । पदवृत्तिः, पदनिरू-
पितावृत्तिः शाब्दबोधौपयिकसम्बन्धइत्यर्थः । नचैतद्विभजन-
मनुपपन्नम् । व्यञ्जनाया अतिरिक्तवृत्तित्वात् । अन्यथा'गच्छग-
च्छसिचेत्कान्तपन्थानःसन्तुतेशिवाः । ममापि जन्मतत्रैवभूया-
द्यत्रगताभवानि'त्यादौतवगमनेनममरणंभविष्यतीत्यादिबोध-
स्यानुभवसिद्धस्यानुपपत्तिरितिवाच्यम् । व्यञ्जनायावृत्तित्वोपग-
मेतस्याःस्वरूपसत्याएवहेतुतायावाच्यतयातज्ज्ञानजन्यपदार्थो-
पस्थितेरनपेक्षितत्वेन तत्तत्पदार्थविषयकशाब्दबुद्धौपदवृत्ति-
ज्ञानजन्यपदार्थोपस्थितेर्हेतुतयाव्यभिचाराद् व्यञ्जनावृत्त्यज-
न्यशाब्दत्वस्यकार्यतावच्छेदककोटौनिवेशगौरवात् । एवन्ता-

दृशताहृशान्वयबोधेताहृशान्वयतात्पर्यज्ञानस्याव्यभिचारात्का-
र्यतावच्छेदकसङ्कोचेगौरवात् । नचव्यङ्ग्यार्थबोधेपितस्य-
हेतुत्वात्कुतोव्यभिचारइतिवाच्यम् । व्यञ्जनाया वृत्तित्वस्वी-
कर्तृणामालङ्कारिणामते व्यङ्ग्यार्थबुद्धौ तस्याहेतुत्वात् ।
अतएव'वयस्यानागरासङ्गादङ्गानांहन्तिवेदनामि'त्यादौवयस्या-
युवतीनागरपुरुषसंयोगादङ्गानांवेदनांहन्तीतितात्पर्यज्ञानवशे-
नशक्यार्थबोधानन्तरंतात्पर्याविषयीभूतस्यवयस्याइङ्गीतिकौना-
गरयोगात्शुण्ठीयोगाद् अङ्गानांवेदनांहन्तीत्यर्थबोधस्याभिधा-
मूलव्यञ्जनाऽतस्तेषामुपपत्तिः ताहृशबोधेतात्पर्यज्ञानस्यहेतुत्वे
शक्तैवताहृशबोधसम्भवेभिधामूलव्यञ्जनास्वीकारानुपपत्तेः
एवंशक्यार्थबुद्धिः प्राक्व्यङ्ग्यार्थबोधवारणायव्यङ्ग्यार्थबोधम्प्रतिशब्द-
क्यादिजन्यबोधस्यहेतुतायातैः स्वीकरणीयतयागौरवाच्च ।
नचव्यञ्जनायावृत्तित्वानुपगमेतत्रतत्र ताहृशबोधस्यानुभवसिद्ध-
स्यानुपपत्तिरिति अगत्याव्यञ्जनायावृत्तित्वमङ्गीकार्यमितिवा-
च्यम् । मनसैवताहृशबोधस्वीकारात् । नचमानसस्यप्रत्यक्षप-
दार्थोपस्थितिमूलकतयामरणाद्युपस्थापकाभावात् कथं त-
वगमनेनममस्मरणमित्यादिमानसोबोधः ममतुताहृशार्थवि-
षयकशाब्दबुद्धिं प्रतिव्यञ्जनायाःस्वरूपसत्याहेतुत्वोपगमान्मर-
णपदार्थोपस्थितिमन्तरेणैवताहृशशाब्दबोधइतिवाच्यम् । ता-
दृशवाक्यज्ञानस्यताहृशवाक्यान्तर्गतजन्मादिपदज्ञानस्यवातदुप-
स्थापकत्वकल्पनात् । नचताहृशवाक्यादिज्ञानस्यस्मृतिजन-
कत्वंकिंवाव्यञ्जनायाः शाब्दबोधजनकत्वमित्यत्रविनिगमकाभा-
वइतिवाच्यम् । व्यञ्जनायाअतिरिक्तायास्तस्याःशाब्दबोधजनक-
त्वस्योक्तगुरुतरकार्यकारणभावद्वयस्यव्यङ्ग्यार्थबोधंप्रतिशक्त्यादि-
ज्ञानजन्यशाब्दबोधकारणत्वस्यचकल्पनामपेक्ष्यताहृशवाक्या-
दिज्ञानस्यमरणादिस्मारकत्वकल्पने स्फुटतरलाघवादित्यलम-

वृत्त्यापदप्रतिपाद्योऽर्थइत्यभिधीयते ॥ इदंपदममुमर्थं-बोधयतु यस्मात्पदादयमर्थोबोद्धव्य, इतिचेच्छासङ्केतरूपावृत्तिः । तत्राधुनिकसङ्केतःपरिभाषा, तयाचार्थबोधकं पदंपारिभाषिकम् । यथाशास्त्रकारादिसङ्केतितनदीवृद्ध्यादिपदम् । ईश्वरसंकेतः शक्तिस्तयार्थं-बोधकंपदंवाचकम् । यथागोत्वादिविशिष्टबोधकंगवादिपदम् । तद्बोध्योर्थोगवादिर्वाच्यः । सएवार्थोमुख्य-इत्युच्यते ॥ वाच्यवाचकपदेईश्वरेच्छायाबोधकत्वेन-याविषयता सैवशक्त्यर्थः । तस्याश्रयस्वरूपंकर्तृत्वंपदेकर्तृप्रत्ययेनबोध्यते । पदंगांवक्तिगांब्रूतेगोर्वाचकमित्यादौकर्मप्रत्ययान्तेनार्थवाचकपदेनतत्तदर्थविषयक--

तिविस्तरेण ॥ अनयोःसमीचीनत्वासमीचीनत्वेसुधीभिर्विभाव्ये ॥ वृत्त्यापदप्रतिपाद्यइति । वृत्त्यातत्पदप्रतिपाद्यएवतदर्थइत्यर्थः । तत्पदप्रतिपाद्यत्वन्तत्पदप्रयोज्यशाब्दबोधीयविषयताश्रयत्वम् । वृत्त्येत्यनुपादानेघटवद्भूतलमित्यानुपूर्वीघटकघटपदप्रयोज्यशाब्दबोधीयविषयत्वस्यभूतलेपिसत्वात्तस्यघटपदार्थत्वापत्तिरतोवृत्त्येत्युक्तम् । तथाचस्ववृत्तिप्रयोज्यायाशाब्दबोधीयविषयतातदाश्रयस्तत्पदार्थः पर्यवसितः । केचित्तुतत्पदप्रतिपाद्यत्वन्तत्पदोपस्थाप्यत्वंतथाचयथाकथञ्चित्कालिकादिसम्बन्धेनघटपदादिनापटादेरप्युपस्थितिसम्भवात् पटस्यघटपदवाच्यत्वापत्तिरतोवृत्त्येत्युक्तमित्याहुः । सङ्केतरूपांवृत्तिं विवृणोति । इदमिति । इदमेतदर्थविषयकबोधजनकंभवत्वित्यर्थः । यस्मादिति । तत्पदजन्यविषयतावान् भवत्वित्यर्थः ॥ ईश्वरेच्छायाः बोधजनकत्वेनयाविषयताइति । ईश्वरेच्छानिरूपितायाबोधविषयतातन्निरूपितजनकत्वप्रकारतानिरूपितविषयतेत्यर्थः ॥

स्वरूपतत्तत्कर्मत्वं धात्वर्थैकदेशे बोधे बोध्यते। पदेन गौ-रुच्यते पदस्य गौर्वाच्य इत्यादौ पदनिष्ठधात्वर्थीभूताद्दश-विषयतायाः परंपरया निरूपितत्वं तादृशविषयतानि-रूपकबोधजनकत्वप्रकारतान्तःपातिबोधनिष्ठविषय--तानिरूपकविषतासंबन्धावच्छिन्नप्रकारताश्रयत्वरूपं तादृशक्रियाकर्मत्वं गवादौ कर्मप्रत्ययेन बोध्यते। द्वितीयेच्छायाः सङ्केतरूपत्वे तद्वैपरीत्यमूह्यम् इति न्याय-सिद्धान्तः॥ अत्र मीमांसकानुयायिनः। अपभ्रंशादपि शक्तिभ्रमेणार्थप्रत्ययात्मन्माञ्च विषयके भगवत्सङ्केते

धीरत्वर्थैकदेशे बोधे बोध्यते इति। तथा च गोपदं गांवक्तीत्यादौ गोविषयकबोधविषयतानिरूपितजनकत्वप्रकारतानिरूपितेश्वरेच्छाविषयत्वाश्रयो गोपदमित्यन्वयबोधः। न च गोविषयकघटविषयक समूहालम्बनबोधस्यापि कदाचिदुत्पत्त्या गोपदं घटंवक्तीत्यादिव्यवहारापत्तिरिति वाच्यम्। गोपदं गांवक्तीत्यादौ गोविषयकबोधविषयतानिरूपितजनकत्वप्रकारतानिरूपितविषयताश्रयो गोपदम् इत्यन्वयबोधे गोविषयकत्वस्य बोधे बोधान्वयिविषयतायामपि स्वावच्छिन्नत्वसंसर्गेणान्वयस्वीकारात्। तथा च गोपदं गोविषयकबोधजनकं भवत्वित्याकारकभगवदिच्छाविषयतान्तर्गतबोधविषयतायां घटविषयकत्वानवच्छिन्नत्वात् न तथाप्रयोगः। केचित्तु बोधे बोध्यते इत्यस्य बोधविषयत्वे इत्यर्थः। तथा च गोविषयत्वस्यावच्छिन्नत्वसंसर्गेण धात्वर्थैकदेशे बोधविषयत्वेऽन्वयान्नानुपपत्तिरित्याहुः। वैपरीत्यमूह्यमिति। गोपदं गांवक्तीत्यादौ धात्वर्थीभूतबोधविषयत्वप्रकारतानिरूपितविषयतायाः परंपरानिरूपकत्वं तन्निरूपितविषयतानिरूपितबोधविषयतानिरूपितजन्यत्वविषयतानिरूपितविषयताश्रयत्वरूपकर्तृत्वं क-

तस्यापिबोधकत्वेनविषयत्वमितिनैयायिकैरभ्युपगमात्तस्यापिवाचकत्वंसाधुत्वञ्चस्यात् एवंलाक्षणिकगङ्गादिपदस्योक्तयुक्त्यातीरादिवाचकत्वापत्तिः। यत्तुतादृशेच्छयाभगवदुच्चरितत्वं वाचकत्वम् अपभ्रंशादयश्च नार्थंप्रत्याययन्तेच्छयाभगवदुच्चरिता इतिनातिप्रसङ्ग इति चेन्न। अस्मदाद्युच्चरितेष्वव्याप्तेः भगवदुच्चरितजातीयत्वनिवेशेपिवेदस्थलाक्षणिकपदेष्वतिव्याप्तेः सादिदेवदत्तादिपदेष्वव्याप्तेश्च।

तं प्रत्ययेनबोध्यते। पदेनगौरुच्य इत्यादौधात्वर्थीभूतबोधविषयत्वप्रकारतानिरूपितविषयताया आश्रयत्वरूपंकर्मत्वंकर्मप्रत्ययेनप्रत्याय्यते। तथाचस्वनिरूपितविषयत्वविषयतानिरूपितबोधविषयतानिरूपितजन्यत्वविषयतानिरूपितविषयतासम्बन्धेनपदनिष्ठायाबोधविषयत्वप्रकारतानिरूपितविषयतातदाश्रयो गौरित्यन्वयबोधस्तादृशसंबन्धावच्छिन्ननिष्ठत्वंतत्तोयार्थः। अपभ्रंशतागाव्ग्माव्गशब्दात्बोधकत्वेनबोधजनकत्वेनतस्यापि अपभ्रंशस्यापिसाधुत्वंदुरदृष्टाजनकत्वंशक्तिमद्भिन्नपदस्यैवदुरदृष्टजनकत्वादितिभावः। एवंलाक्षणिकइति। उक्तयुक्त्यागङ्गादिपदात्तीराविषयकबोधोत्पत्त्यासन्मात्रविषयकोभगवत्सङ्केतितस्याबोधकत्वेनविषयत्वसत्वेनेत्यर्थः। अपभ्रंशादयइत्यादिनालाक्षणिकपरिग्रहः। यद्यपिभगवदुच्चरितसजातीयत्वंयदिभगवदुच्चरितवृत्तिजातिमत्त्वं, तदाघटबोधेच्छयाभगवदुच्चरितघटवृत्तिशब्दत्ववत्तामादायघटपदेपिपटवाचकत्वापत्तिः। यदिचभगवदुच्चरितवृत्तिशब्दत्वव्याप्यजातिमत्त्वं तदाघटत्वमादायकेवलघकारशब्देपिघटवाचकत्वापत्तिः यदितत्तदुच्चरितवृत्त्यानुपूर्वीमत्त्वन्तदापिघटत्वविशिष्टत्वमादायघशब्दे वाचकत्वापत्तिः। अथएकपुरुषा-

च्चरितशब्देऽन्यपुरुषोच्चरितशब्दवैजात्यमनुभवसिद्धमनुभवसि-
द्धत्वञ्च तत्पुरुषोच्चारणप्रयोज्यत्वम् । तथाचानुमतमाह्निको भ-
गवतः सकलजातीयशब्दोच्चारणकर्तृत्वात्सर्वेषामेवशब्दाना-
मीश्वरोच्चारणप्रयोज्यजातिमत्त्वम् अपभ्रंशादौ च तादृशजाति-
र्नस्वीक्रियते । घटविषयकबोधेच्छया भगवदुच्चारणप्रयोज्यजाति-
मत्त्वन्तद्वाचकत्वमिति चेन्न । तादृशजातेः प्रत्येकवर्णेष्वेवानुभ-
वासिद्धत्वात् । यदि च घकारोत्तरटकारे विलक्षणजातिरूप्यते त-
दा प्रत्येकवर्णेष्वनुभवासिद्धाया विलक्षणजातेरप्युपगन्तव्यतया घ-
कारादेरपि घटवाचकत्वापत्तिः । घटबोधेच्छया भगवदुच्चारणंत-
त्प्रयोज्यं न प्रत्येकवृत्तिजातौ अपि तु घकारोत्तरवृत्तिटकारवृत्ति
जातावेवेति वर्त्तसि कोवाग्रहधाति, तथात्वेप्यस्मदुच्चरितघटादि-
पदेष्वव्याप्तेर्दुर्वारत्वात् । तथाप्येतादृशवितर्कणाया मरिद्दिषात्
तत्तद्दोषमुपेक्ष्यस्फुटतरन्तद्दोषान्तरमाह । वेदस्थलाक्षणिकेदू-
ति । गुरवस्तु तादृशेच्छया भगवदुच्चरितवृत्तिबोधजनकत्वप्रकार-
तानिरूपितविशेष्यतावच्छेदकतापर्याप्त्यधिकरणधर्मवत्त्वरूपं तादृ-
शेच्छया भगवदुच्चरितसजातीयत्वमिति निवेशेन नास्मदुच्चरितपदे-
ष्वव्याप्तिर्नवापभ्रंशादावतिव्याप्तिरित्यतो दोषान्तरमाह वेदस्थला-
क्षणिकेतीति प्राहुः । आयुर्घृतमित्यादि । वेदे आयुष्पदस्यायुर्ज-
नके लाक्षणिकतया तस्यायुर्जनकवाचकत्वापत्तिरिति भावः । सा-
दीति । स्वसजातीयध्वंसप्रागभावप्रतियोगित्वं, स्वाश्रयप्रतियो-
गिध्वंसव्याप्यतत्प्रागभावप्रतियोगिवृत्तित्वस्वतादात्म्योभयसम्ब-
न्धेन धर्मविशिष्टधर्मवत्त्वमनादित्वन्तदन्यत्वं सादित्वम् । अथवा
तादृशोभयसम्बन्धेन धर्मविशिष्टधर्मान्यधर्मवत्त्वं सादित्वम् । य
द्धर्मावच्छिन्ने सादित्वव्यवहारस्तद्धर्मस्यैव धर्मविशिष्टान्यधर्मवत्त्वेन
भानस्य व्युत्पत्तिसिद्धतया घटशब्दादौ तादृशधर्मान्यतत्तद्व्यक्तित्वादि-

द्वादशेऽह्नि पिता नामकुर्यादिति वेदे नामपदस्य देवदत्ता-
दिपरत्वे देवदत्तेत्यादिस्वरूपाणां भगवदनुच्चरितत्वात्।
एवमीश्वरसङ्केतस्य शक्तित्वे ईश्वरानङ्गीकर्तृमते शाब्द-
बोधानुपपत्तिः। अथ शाब्दबोधोपयोगितायामीश्वरे-

धर्मं वक्ष्ये पिघटशब्दः सादिरिति व्यवहारस्यानापत्तिः। ईश्वरोच्च-
रितशब्दवाच्यार्थवाचकशब्दान्यशब्दत्वम्। ईश्वरोच्चरितशा
ब्दान्यत्वं वाप्रकृते सादित्वमिति। द्वादशेऽह्नि पिता नामकुर्याद्
इति। अत्र पुत्रस्येत्यध्याहार्यम्। तत्र पुत्रपदं पुत्रत्वसमानाधिक-
रणधर्मविशिष्टपरम्। स्वविषयकज्ञानजनकत्वं तदुत्तरषष्ठ्यर्थः
नामपदं नामत्वसमानाधिकरणधर्मविशिष्टपरम्। तथा च पुत्रत्व-
समानाधिकरणधर्मविशिष्टविषयकज्ञानजनकनामत्वसमानाधि-
करणधर्मविशिष्टविषयकपितृसमवेतकृतिरिष्टसाधनमित्यन्वय-
बोधः। अतएतादृशवाक्यात्पुत्रत्वसमानाधिकरणधर्मवद्विशेष्य-
कनामत्वसमानाधिकरणधर्मविशिष्टविषयकपितृसमवेतकृति-
धर्मिकेष्टसाधनत्वप्रकारकबोधो जायतामित्याकारकभगवत-
स्तात्पर्यमङ्गीकार्यम्। तादृशभगवदिच्छानिरूपितपुत्रत्वसमा-
नाधिकरणचैत्रत्वादिजात्यवच्छिन्नविषयकबोधजनकत्वेन विषय-
तायां नामत्वसमानाधिकरणचैत्रपदत्वाद्यानुपूर्वीविशिष्टे सत्त्वा-
द् भगवत्सङ्केतरूपशक्यत्वं तत्र निर्बाधमेवेति तस्य लक्ष्यतयात-
त्राव्याप्तिसङ्गतिरिति बोध्यम्। एवमीश्वरेति। ईश्वरेच्छानिरू-
पितपदजन्यबोधविषयत्वप्रकारतानिरूपितविशेष्यतायास्तादृ-
शेच्छानिरूपितस्वविषयकबोधजनकत्वप्रकारतानिरूपितविशे-
ष्यतायां वा शक्तित्वे। शाब्दबोधोपयोगितायां, शाब्दबोधकार-
णतावच्छेदककोटौ। एवं चेति। ईश्वरत्वमनिवेश्य शक्तिज्ञान-

यत्वमनुपादेयम् । एवं चाधुनिकसङ्केतज्ञानादपि शाब्दबोधस्तादृशसङ्केतस्य वृत्तित्वं च निर्वहति । न चाधुनिकसंकेतस्य वृत्तित्वे तात्पर्यस्यापि तथात्वप्रसङ्गस्तस्यापि बोधकत्वेन पदविषयतया सङ्केतरूपत्वात् । न चेष्टापत्तिः । तथा सति लक्षणास्थले तात्पर्यस्य वृत्तितया लक्षणाया वृत्तित्वोच्छेदप्रसङ्गादिति वाच्यम् । यतः पदार्थोपस्थितिव्यापारकः सङ्केतो वृत्तिः, तात्पर्यज्ञानं च साक्षादेव शाब्दबोधोपयोगि न तु पदार्थोपस्थितिद्वारा, वृत्त्युपस्थापितपदार्थ एव प्रकरणादिना वक्तृतात्पर्यावधारणात् । *तत्पुरुषसङ्केतिततदुच्चारितडित्थादिपदेष्वाधुनिकसङ्केतस्तत्पुरुषवाक्यादित एव प्रागवधारित इति पदार्थोपस्थितितः पूर्वमेव तत्स्मरणसंभवेन तस्य पदार्थस्मारकतया वृत्तित्वं निर्वाह इति चेत् *एवमपि संकेतस्य शाब्दसंबन्धत्वे मानाभावेन निष्प्रतियोगिकतया तदसंभवेन च पदार्थोपस्थापकत्वासंभवेन वृत्तित्वानिर्वाहात् ।

---

स्य हेतुत्वे च । आधुनिकेति । तथा च शक्तिज्ञानकारणतावच्छेदकस्य वृत्तित्वस्याधुनिकसङ्केतज्ञानसाधारणत्वात् स्वातन्त्र्ये णकारणतां विनापि शाब्दबोध इति भावः । पदार्थोपस्थितिव्यापारकस्संकेत इति । पदार्थोपस्थितिद्वारा शाब्दबोधोपयोगिकसम्बन्ध इत्यर्थः । प्रकरणादिनेति । प्रकरणम्भोजनादि । डित्थादीति । डित्थ इति काष्ठमये हस्तिनि सङ्केतः । श्यामरूपो युवा विद्वान् बलवान् धार्मिकः प्रियः । सर्वशास्त्रप्रवक्ता च डित्थ इत्यभिधीयते । इति प्रवादात्तादृशपुरुषो वा । मानाभावेनेति । ननु सप्रतियोगिकत्वमेव मानमत आह । निष्प्रतियोगिकतयेति ।

---

*तथा च लक्षणाया वृत्तित्वानुपगमे गङ्गादिपदात्तीरानुपस्थितौ तत्तत्पदव्यक्तिस्तात्पर्याग्रहाच्छाब्दबोधानुपपत्तिस्तस्य वृत्तित्व-

एतेनशाब्दबोधौपयिकसंबन्धत्वेनेश्वरसंकेतज्ञानंहेतुस्त-
न्मीमांसकानामपिसंभवतिताद्दशज्ञानविरोधिविप-
रीतज्ञानाभावादितिनिरस्तम् । यत्तु स्वजन्यबोधवि-
षयत्वप्रकारकेच्छाविशेष्यत्वमर्थेपदस्मम्बन्धः पदेचार्थ-
स्यविपरीतः अस्यसम्बन्धत्वमन्यथानुपपत्त्याकल्प्यते,
एताद्दशपरंपरायाअपभ्रंशस्थलेसम्बन्धतानस्वीक्रियत-
इतितत्रतत्सम्बन्धावगाहिज्ञानंभ्रमएवेति । तदपितु-
च्छम् । अक्लृप्तस्यताद्दशेच्छाविषयत्वस्यसम्बन्धत्वोपगमे
ताद्दशज्ञानविषयत्वस्वसमानकालीनज्ञानविषयत्वा-

एतेनेति । निष्प्रतियोगिकतयासम्बन्धत्वाभावेन । एवंताद्दशरू-
पेणकारणतायामात्माश्रयोपिदोषोबोध्यः । तच्चेति । शाब्दबो-
धोपयोगिकसम्बन्धत्वेनेश्वरसङ्केतज्ञानञ्च । ताद्दशेति । शा-
ब्दबोधोपयोगिकसम्बन्धत्वेनेश्वरसङ्केतज्ञानविरोधिज्ञानाभा-
वादित्यर्थः । विपरीतइति । स्वनिष्ठविशेष्यतानिरूपितविषय-
त्वप्रकारतानिरूपितबोधविषयतानिरूपितजन्यत्वविषयतानि-
रूपितविषयत्वमित्यर्थः । स्वविषयकबोधजनकत्वप्रकारतानिरू-
पितविशेष्यत्वमित्यर्थोवा । स्वपदंपदार्थपरं, ताद्दशज्ञानविषयत्वं,
स्वजन्यबोधजनकत्वप्रकारकज्ञानविषयत्वमित्यर्थः । स्वसमान-
कालीनेति । स्वपदंपदपरम् । आदिनास्वविषयकज्ञानविषय-

मावश्यकं, नचतात्पर्यग्रहार्थंलक्षणाधीनोपस्थितेरपेक्षितत्वे-
पि तदधीनोपस्थितित्वेनशाब्दबुद्धिहेतुत्वेमानाभावेनतस्या-
वृत्तित्वासिद्धिः लक्षणास्थलेतात्पर्यरूपसंकेतज्ञानाधीनोपस्थि-
तितएवशाब्दबोधनिर्वाहात् आधुनिकसंकेतस्थलेतात्पर्यज्ञा-
नाधीनोपस्थितेः शाब्दबोधप्रयोजकतायाः क्लृप्तत्वादितिवा-
च्यम् । लक्षणाधीनपदार्थोपस्थितिसत्वेमुख्यार्थबाधादिनात-
त्तदर्थेतत्तत्पदव्यक्तेस्तात्पर्यग्रहेउपस्थित्यन्तरमन्तरेणैवतत्तदर्थानु-
भवस्यसर्वानुभवसिद्धत्वादाधुनिकसंकेतस्थले च पूर्वसंकेतक-
र्तृपुरुषवाक्यतोऽर्थविशेषेडित्थादिपदस्यसंकेतग्रहात्तत्पदेना--

दिपरम्परायाअपिविनिगमनाविरहेणसम्बन्धताप्रस-
ङ्गात्। तस्मात्पदपदार्थयोस्सम्बन्धान्तरमेववाच्यवाच-
कभावइतिवदन्ति । यत्तुज्ञानेपदानांशक्तिर्नत्वर्थेत-
थाचतज्ज्ञानशक्तत्वंतद्वाचकत्वंतच्चतद्विषयकशाब्द-
बोधजनकतावच्छेदकधर्मवत्त्वम् । सचधर्मोवह्न्या-
दिनिष्ठदाहानुकूलशक्तिरिवपदार्थान्तरमेव । लाघ-
वात्तेनानुभावकमेवेतिनतत्रशक्तिः । घटादिपदस्य
मितिमात्रसमभिव्याहृतपदार्थान्तरधीजनकत्वेपिन-
तद्वाचकत्वंतद्विषयकत्वावच्छिन्नज्ञानशक्तपदस्यैवत-
द्वाचकत्वान्मितिमात्रविषयकत्वेनज्ञानस्यनकिंचि-
त्पदशक्यताज्ञानसामान्यसामग्र्याएवमितिमात्रभा-
सकतयापदान्तरस्यचतदर्थभासकतयातद्विषयकत्व-
स्यचतत्पदजन्यतावच्छेदकत्वेमानाभावात् । का-
र्यान्वितस्वार्थेपदानांशक्तिरितिवादिनांगुरूणांसाध्या-
त्परम्परासाधारणकार्यत्वविषयतानिरूपितत्वेनघ-

त्वपरिष्कृतः । स्वपदंपदार्थपरम् । सम्बन्धताप्रसङ्गादिति ।
तथाचताहशसम्बन्धत्वज्ञानजन्यपदार्थोपस्थितितोपिशाब्दबो-
धप्रसङ्गइतिभावः । ज्ञानेपदानांशक्तिरिति । ज्ञाननिष्ठाप-
दनिरूपिताशक्तिस्तन्मतेतद्विषयकशाब्दत्वावच्छिन्नंप्रतिनिरूपक-
तासम्बन्धावच्छिन्नशक्तिमत्पदस्यहेतुत्वमित्यवधेयम् । तज्ज्ञा-
नशक्तत्वमिति । ननुघटपटविषयकज्ञानमादायघटपदस्या-
पिघटपटवाचकतापत्तिरतआह । तच्चेति । तद्विषयकेति ।
तद्विषयकशाब्दत्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदक-
धर्मवत्त्वमितिपर्यवसितार्थः नातःपूर्वदोषावकाशः । तद्वि-
षयकत्वावच्छिन्नज्ञानशक्तपदस्यैवेति । तद्विषयत्वावच्छिन्नजन्य-
तानिरूपितजनकतावच्छेदकशक्तिमत्पदस्यैवेत्यर्थः । शाब्दबो-
धोपयोगिकसम्बन्धत्वेनहेतुत्वे आत्माश्रयोबोध्यः । वादिनामि-

र्थंविशेषोपस्थितेः प्रकरणादिनातत्तत्पदव्यक्तेस्तात्पर्यग्रहेसति-
शाब्दबोधस्यतत्तदन्यान्तराधीनोपस्थितिमन्तरेणैवात्पत्त्याधुनिकसं-
केतस्यवृत्तित्वमिति चेद्—पा० ॥

टादिविषयतायाघटादिपदजन्यतावच्छेदकत्वेपिन-
घटादिपदस्यकार्यतावच्छेदकत्वमपितुलिङादिप-
दस्यैवतद्विषयकत्वावच्छिन्नेत्यतसाक्षात्परम्परासा-
धारणनिरूपितत्वाविशेषणतयावच्छेदकत्वस्यैवनि-
वेशात् । नचकार्यानुकूलशक्तेःस्वरूपसत्याएवकार्या-
नुकूलतयापदार्थोपस्थितौशाब्दबोधेचज्ञातोपयोगिनो-
र्थेपदस्यवृत्तिरूपशक्त्यन्तरस्वीकारआवश्यकइतिवाच्य-
म् । दाहादिकार्येवह्न्यादिनिष्ठशक्तेःस्वरूपसत्याएवोप-

ति । लौकिकलिङःकार्यत्वेशक्तिः अतःपचेतघटमानयेत्यादौ-
पाकःकार्यः घटानयनंकार्यमित्याद्यन्वयबोधः । वैदिकलिङः
कार्येशक्तिरतोयजेतेत्यादौयागजन्यंकार्यमित्यन्वयबोधः ।
साक्षात्परम्परासाधारणकार्यत्वविषयतानिरूपितघटादिविष-
यताशालि शाब्दबुद्धित्वावच्छिन्नम्प्रतिशक्तिमत्त्वेनघटादिपदस्यहे-
तुत्वाल्लिङ्पदघटितवाक्यादेवशाब्दबोधोनार्थवादादितिवादि--
नांगुरूणामित्यर्थः।पदानां,लिङ्पदातिरिक्तपदानाम् । साक्षा-
त्परंपरेति । केवलपरंपरयाकार्यत्वविषयतानिरूपितत्वनिवेशे-
पचतइत्यादौपाकः कार्यंइत्यन्वयबोधात्पाकविषयतायाः परंप-
राकार्यत्वविषयत्वानिरूपिततयाऽसंगतिरतः साक्षादिति। साक्षा-
त्कार्यत्वविषयतानिरूपितत्वोक्तौयजेतघटमानयेत्यादौयागज-
न्यंकार्यंघटानयनंकार्यमित्यन्वयबोधाद् यागविषयतायांसाक्षा-
त्कार्यत्वविषयतानिरूपितत्वाभावात्तथैवासङ्गतिरतः परंपरेति ।
निरूपितत्वाविशेषणतयेति । निरूपितत्वनिष्ठावच्छेदकत्वा-
निरूपकत्वस्यावच्छेदकत्वेनिवेशादित्यर्थः । नचशक्तिमत्त्वे-
नयथाघटादिपदनिष्ठकारणतानिरूपितकार्यतावच्छेदकंसाक्षा-
त्परंपरयाकार्यत्वविषयतानिरूपितघटादिविषयताशालिशाब्द-

योगित्वेपिशाब्दबोधानुकूलशक्तेः शाब्दबोधेपदार्थो-
पस्थितौचज्ञातोपयोगित्वोपगमेबाधकाभावात् ।
अतीतानागतपदज्ञानादपिशाब्दबोधोत्पत्त्यापदाना-
महेतुत्वेनतत्त्वहेतुतावच्छेदकशक्त्यसम्भवइतितुनश-
ङ्क्यं तन्मतेपदानांनित्यत्वात् । अस्तुवातज्ज्ञाननि-

त्वं तथाविनिगमनाविरहाद् घटादिविषयतानिरूपितकार्य-
त्वविषयताशालिशाब्दत्वमपीतिकार्यत्वविषयतानिष्ठताद्दश-
कार्यतावच्छेदकतायानिरूपितत्वनिष्ठावच्छेदकत्वानिरूपकत
याघटादिपदस्यकार्यतावाचकत्वापत्तिः दुर्वारैवेतिवाच्यम् ।
कार्यत्वविषयतानिरूपिततद्विषयकत्वावच्छिन्नकार्यतानिरूपि-
तकारणतावच्छेदकशक्तिमत्त्वं वाचकत्वमित्यर्थस्यविवक्षि-
तत्वात् । तथाचकार्यत्वविषयतायाः कार्यत्वविषयत्वानिरूपि-
ततयाघटपदंकार्यतावाचकमिति व्यवहारस्यनापत्तिरितिके-
चित् । परेतुतद्वाचकत्वंतद्विषयकत्वावच्छिन्नकार्यतानिरूपित-
कारणतावच्छेदकशक्तिमत्त्वमेवतद्विषयकत्वावच्छिन्नत्वंचाव-
च्छेदकतायांकार्यत्वविषयतातिरिक्तविषयतानिरूपितत्वानव-
वच्छिन्नत्वंविशेषणंदेयम् । तथाचताद्दशनिरूपितत्वानवच्छिन्नत-
द्विषयकत्वनिष्ठावच्छेदकताकजन्यतानिरूपितजनकतावच्छे-
दकशक्तिमत्त्वमितिफलितार्थः । तथाचघटादिविषयतानिरूपि-
तकार्यत्वविषयताशालिशाब्दबुद्धित्वावच्छिन्नकार्यतावच्छेद-
कत्वस्यकार्यत्वविषयतायाःसत्त्वेपिताद्दशावच्छेदकतायाः का-
र्यत्वविषयातिरिक्तघटादिविषयतानिरूपितत्वावच्छिन्नतयातद-
नवच्छिन्नत्वविरहान्नघटादिपदस्य कार्यतावाचकत्वापत्तिरि-
त्याहुः । अस्तुवातज्ज्ञाननिष्ठशक्तोऽति । नचशक्तिमत्त्वेनप-
दज्ञानस्यहेतुत्वेतद्विषयकत्वावच्छिन्नकार्यतानिरूपितकारणता-

निष्ठशक्त्यातद्वाचकत्वमितिमीमांसकमतविशेषः ॥
नाचासौविचारसहः यतस्तन्मतेलाक्षणिकस्यानुनुभावकत्वंदुर्घटमेव । पदार्थोपस्थितिद्वाराशक्यार्थानुभवेशक्तस्येवलक्ष्यार्थानुभवेलाक्षणिकस्यापिहेतुतायादुर्वारत्वात् । तत्रापिशक्तेरावश्यकतयावाचकतापत्तेः । पदार्थोपस्थित्यान्यथासिद्धत्वेशक्तस्यापितथात्वापातात् । नचानुभावकतावच्छेदकशक्त्यभावा-

वच्छेदकीभूतशक्तिमज्ज्ञानविषयत्वंतद्वाचकत्वंवाच्यम् । तथाच-घटपटादिपदविषयकसमूहालम्बनघटपटादिविषयकज्ञानमादायपटपदस्यापि घटवाचकत्वापत्तिः, घटविषयकत्वावच्छिन्नकार्यतानिरूपितकारणावच्छेदकीभूतशक्तिमत्ताहृशसमूहावलम्बनज्ञानविषयत्वस्यपटादिपदेपिसत्त्वादितिवाच्यम् । स्वभिन्नत्वस्वसामानाधिकरण्योभयसम्बन्धेनशक्तिविशिष्टशक्तिशून्यत्वस्यशक्तिद्वयशून्यत्वस्यवाज्ञानेविशेषणत्वोपगमात् । तथाचताहृशसमूहालम्बनज्ञानस्यशक्तिविशिष्टशक्तिमत्त्वस्यैवसत्वेननापत्तिः । नचघटपदविषयकघटादिविषयकसमूहालम्बनज्ञानमादाय घटादेरपिपटवाचकतापत्तिः ताहृशज्ञानेताहृशशून्यत्वादितिवाच्यम् । तद्विषयकत्वावच्छिन्नजन्यतानिरूपित जनकतावच्छेदकशक्तिमज्ज्ञानविषयशब्दत्वस्यैवतद्वाचकत्वपदार्थत्वात् । नचतथापिघटपदविषयककाकारादिविषयकसमूहालम्बनमादायककारादिवर्णेष्वपिघटवाचकतापत्तिरितिवाच्यम् । कोशादौककारादिवर्णस्यापिशक्त्यवधारणात्ताहृशज्ञानस्यशक्तिविशिष्टशक्तिशून्यत्वस्याभावादित्यसमूहालम्बनघटपटादिज्ञानमादायघटादिपदस्यघटादिवाचकत्वोपत्तिरिति । वस्तुतस्तुस्वसामानाधिकरण्यस्वव्यभिचारित्वस्वव्यापकत्वैतत्त्रितयसम्बन्धेनशक्तिविशिष्टशक्तिमदन्यत्वस्यज्ञानेविशेषणंदेयम् । ते-

ल्लाक्षणिकस्यनानुभावकत्वसम्भवइतितैर्वाक्यार्थघटका-
र्थान्तरवाचकमेवपदंस्वार्थस्येवतदन्वयप्रतियोगिलक्ष्या-
र्थस्याप्यनुभावकत्वमुपेयतइतिवाच्यम् । एवंसतिगङ्गा-
यांघोषइत्यादौघोषादिपदस्यगङ्गातीरादिरूपार्थानु-
भावकतावच्छेदकशक्तिमत्त्वेनतद्वाचकत्वापत्तेः ।
लाक्षणिकस्याननुभावकत्वेशक्तपदाघटितधूमादित्या-
दिहेतुवाक्यादन्वयानुपपत्तेश्च । तत्रधूमादिपद-
स्यधूमज्ञानेविभक्तेश्चज्ञाप्यत्वेलाक्षणिकत्वात् । अथ
लक्ष्यार्थस्यनशाब्दबोधेप्रवेशः अपितुस्मृतस्यतस्यपदा-
र्थान्तरैरसंसर्गाग्रहमात्रंतथाचनानुपपत्तिः । नचलक्ष्या-
र्थस्यशाब्दबोधविषयत्वानुपगमेतदुपरागेणस्तृणोमीत्य-
नुव्यवसायोनुपपन्नइतिवाच्यम् । इष्टत्वादविधेयेोप-
रागेणैवतथाप्रत्ययात् । लक्ष्यार्थस्यशाब्दबोधविषय-

नघटपटादिज्ञानस्यनियमतस्तद्घटकीभूतघकारादिविषयकत्वे-
नघटपदार्थज्ञानजनकतावच्छेदकीभूतशक्तेरुपदर्शितोभयसम्ब-
न्धेनशक्तिविशिष्टतयाशक्तिविशिष्टशक्तिशून्यत्वविरहेपिनक्षति-
रितिमन्तव्यम् । अथयादृशविषयकज्ञानंनियतंपदान्तरविषयकं
तादृशपदेतदर्थवाचकत्वानुपपत्तिरित्यत्रकउपायइतिचेत्तादृश-
स्थलानुपगमएवोपायः । अभ्युपगमेपिग्रन्थकृदुक्तदोषस्येवतद्दो-
षस्यापितन्मतेसत्त्वात् । अस्तुवेत्यत्रवाकारस्यानास्थैवाऽर्थइति-
ध्येयम् । तदन्वयप्रतियोगीति । स्वार्थान्वयप्रतियोगिलक्ष्यार्था-
नुभवंप्रतिस्वस्यहेतुत्वसपेक्षतेइतिभावः । शक्तिमत्त्वेनेति । त-
न्मतेकारणमात्रस्यशक्तिमत्त्वेनैवहेतुत्वादितिभावः । असंसर्गा-
ग्रहमात्रमिति । बाधनिश्चयाभावकालीनघोषस्यशाब्दानुभवः

त्वेपितस्यविधेयतयाभानानुपगमात् । विधौनपरःशाब्दार्थइतिसिद्धान्तादितिचेन्न । मञ्चाःक्रोशन्तीत्यादौलक्ष्यार्थमञ्चस्थपुरुषादेःशाब्दबोधविषयतायाआवश्यकत्वात् । अन्यथापूर्वाननुभूतपुरुषादेःप्रतीत्यनिर्वाहात् । अननुभूतस्यस्मरणासम्भवात् । समानप्रकारकत्वमात्रेणशाब्दबोधपदार्थोपस्थित्योःकार्यकारणभावमुपगच्छतांमीमांसकानांशाब्दबोधेयोग्यताबलेनापूर्वार्थस्यभानेनलक्ष्यार्थस्यशाब्दानुभवोपगमेऽपूर्वस्यापिप्रतीत्युपपत्तिरिति तद्विषयकशाब्दत्वावच्छिन्नम्प्रतिशक्तिविशेषपुरस्कारेणतद्वाचकपदस्यतज्ज्ञानस्यवानहेतुतासम्भवः । विशिष्यतत्तत्पदार्थान्विततत्तत्पदार्थबोधेतत्तत्पदसाकाङ्क्षतत्तत्पदज्ञानत्वेनावश्यक्लृप्तकारणतयैवोपपत्तौईदृशकार्यकारणभावस्य निर्युक्तिकत्वात् ॥ इदंतुतत्त्वम् । तीरादौगङ्गापदजन्यबोधविषयतासत्त्वेपितदंशेशुद्धबोधविषयत्वादिनैवताहशविषयत्वादिप्रकारकत्वमीश्वरेच्छायामुपगम्यतेनतुगङ्गापदजन्यबोधविषय'त्वादिनापितत्प्रकारकत्वंमानाभावात् । तदनभ्युपगमेपितस्याःसर्वविषयकत्वाव्याघातात् । नचतथासतिबोधांशेगङ्गापदजन्यतानवगाहितयासर्वविषयकत्वानुपपत्तिरितिवाच्यम् । तीरादिविशेष्यतानिरूपितप्रकारता-

तीरस्यस्मृतिर्मानसज्ञानंवेत्यर्थः । विधौनपरेति । परोलक्ष्यार्थोभूतशब्दार्थःशक्यार्थभिन्नइतियावत् नविधौविधेयतयानभासतेइत्यर्थः । समानप्रकारतेति । तद्धर्मप्रकारकशाब्दबोधेवृत्तिज्ञानजन्यतद्धर्मप्रकारकोपस्थितित्वेनेत्यर्थः । घटादिपदावाच्य-

वच्छेदकघटकतयातदनवगाहित्वेपिबोधांशेस्वातन्त्र्ये- णातदवगाहित्वोपगमात् । तथाचतत्पदजन्यबोध- विषयतात्वावच्छिन्नप्रकारतानिरूपितविशेष्यता- सम्बन्धेनेश्वरेच्छावत्त्वस्येश्वरेच्छानिरूपिततादृश- विशेष्यतावत्त्वस्यवातत्पदशक्यतारूपतयानातिप्रस- ङ्गः।उक्तरीत्यैवघटादिपदजन्यबोधविषयस्यघटान्वि- तकर्मत्वान्वितानयनादेर्घटादिसंसर्गस्यचतादृशबो- धविषयत्वप्रकारकेश्वरेच्छाविषयत्वेपिघटादिपदा- वाच्यत्वमुपपादनीयम् ॥

त्वमुपपादनीयमिति । नचैतावतागङ्गादिपदस्यलक्ष्यार्थतीरा- दिवाचकत्ववारणेपिघटादिपदजन्यबोधविषयत्वप्रकारतानिरू- पितविषताया:संसर्गतोपगमेस्वसमानकालीनज्ञानत्वादेरपि- विनिगमनाविरहेणसंसर्गतापत्तिरितिपूर्वोक्ताक्षेपानुद्धारएवेति- वाच्यम् । स्वसमानकालीनज्ञानविषयत्वादेस्संसर्गत्वास्वीकारे- ईश्वरीयत्वमनिवेश्यशक्तिज्ञानाधुनिकसंकेतज्ञानयोरेकरूपेण- हेतुतालाघवस्यविनिगमकत्वात् । नचशक्तिज्ञानाधुनिकसंकेत- ज्ञानयोर्धर्मितावच्छेदकभेदेनभिन्नमेवकारणतावच्छेदकमिति- वाच्यम् । धर्मितावच्छेदकत्वप्रत्यासत्त्याकारणत्वोपगमात् । शक्तिभ्रमाधुनिकशक्तिज्ञानयोरेकरूपेणकारणत्वकल्पनेलाघ- वाच्च । नचपूर्वाचिप्तवेदस्थलाचणिकपदादावतिव्याप्ति स्तथाप्य- नुद्धारइतिवाच्यम् । तत्रवक्तुरीश्वरस्यायुष्पदमायुर्जनकविष- यकबोधजनकंभवत्वित्याकारकस्यायुर्जनजकमायुष्पदजन्यबो- धविषयतावद्भवत्वित्याकारकतात्पर्यस्यकल्पनायाआवश्यकत्वा- दितिवाच्यम् । तत्राप्यायुर्जनकविषयकबोधोभवतु बोधस्या- युष्पदजन्योभवत्वित्याकारकखण्डशः तात्पर्यस्यैवकल्पनात् ।

तथापरितोषिभायुष्पदादायुर्जनकत्वप्रकारकबोधोभवत्वित्या-
कारकतात्पर्यस्यायुष्पदमपिहत्वायुर्जनकत्वविषयक बोधजनक
भवत्वित्याकारकस्यवातात्पर्यस्यफलबलकल्पनाद्वाशक्तिस्वीकारे
दृच्छानिरूपिततद्विषयतातिरिक्तवृत्तित्वविषयतानिरूपितायाः
बोधविषयतातन्निरूपितजनकत्वप्रकारतानिरूपितविशेष्यतैवता
दृशतात्पर्यीयबोधविषयतायास्तद्विषयत्वातिरिक्तवृत्तित्ववृत्तिवि
षयतानिरूपिततयानानुपपत्तिः। एतत्पदार्थएतत्पदजन्यबोध-
विषयतावान्भवत्वित्याकारकेच्छीयविषयतायाःशक्तित्वेबोधवि
षयत्वएतत्पदजन्यबोधविषयत्वातिरिक्तविषतानिरूपितत्वंवृत्ति
त्वविषयतानिरूपितत्वंवानिवेश्यमित्यपिद्रष्टव्यम् । आयुष्प-
दादायुर्जनकत्वप्रकारकबोधोभवत्वित्याकारकतात्पर्यकल्पने-
नानुपपत्तिरितिकेचित्प्राहुरित्यादिकंसुधीभिर्विभावनीय-
म् ॥ लक्षणायाअनुभावकत्वेसिद्धे इदानींलक्षणानिरूप्यते ।
शक्यसम्बन्धोहिलक्षणा। अनादितात्पर्यवतीनिरूढालक्षणा,य-
थाशुक्लादिगुणविशिष्टबोधकस्यशुक्लादिपदस्य । सादितात्प-
र्यमूलाआधुनिकी,यथाकाव्यादौवक्तुर्निग्राहिका यथापटत्वादि-
नाबोधकस्यघटादिपदादेः । याचइदमादिपदभिन्नविशेष्यवा
चकपदसमानविभक्तिकपदनिरूपिता,सागौणीरूपा यथासिंहो
देवदत्तइत्यत्रसिंहसदृशबोधिका।याचइदमादिपदविशेष्यवाच-
कपदसमानविभक्तिकपदनिरूपितासासाध्यवसानिका, यथा-
सिंहोयमित्यत्रसिंहसदृशबोधिका। एतत्लक्षणाद्वयंगौणीत्युच्य-
ते। सादृश्यलक्षणागौणीतितत्लक्षणात्। सादृश्यातिरिक्तसंब-
न्धतस्तादृशलक्षणाद्वयीशुद्धाप्युच्यते यथाआयुर्घृतमायुरेवेदमि
त्यत्रायुर्जनकबोधिका । कदाचिल्लक्षणाउपादाननाम्नी। यथा
कुन्ताःप्रविशन्तीत्यादौकुन्तधरबोधिका काचिल्लक्षणाशक्यावृ-
त्तिरूपेयबोधिकाजहत्स्वार्था, यथातीरत्वविशिष्टबोधिकागङ्गा

अन्विताभिधानवादिनस्तुपदार्थसंसर्गस्यापिवाच्यतां स्वीकुर्वन्ति तन्मतेइतरान्वितघटोघटपदशक्यइत्येताद्दशसंबन्धज्ञानशाब्दबोधप्रयोजकं, घटोघटपदवाच्यइत्याकारकस्यान्वयांशानन्तर्भावेण शक्तिग्रहस्यतथात्वेशक्तिग्रहाविषयतयापदार्थसंसर्गस्यशाब्दबोधविषयतानुपपत्तिः । नचेतरान्वितघटस्यवाक्यप्रतिपाद्यतयाशाब्दबोधात्प्राक्शक्तिग्रहएवदुर्घटःअनुपस्थितत्वादितिवाच्यम् । विशेषतःपदार्थान्तरघटितस्यतदन्वितघटादिरूपवाक्यार्थस्यप्रागनुपस्थितावपिइतरपदार्थत्वादिनासामान्यधर्मप्रकारेणतद्घटितस्यतदन्वितघटादेः प्रागुपस्थितिसंभवेनतच्छक्तिग्रहस्यसुघटत्वात् । वस्तुतस्तुपदार्थन्तरमनन्तर्भाव्यकेवलान्वयांशान्तर्भावेणशक्तिग्रहस्यशाब्दधीप्रयोजकतोपेयते, प-

पदस्य । काचिच्छक्यलक्ष्योभयवृत्तिनाशक्यमात्रवृत्तिनावाशक्यतावच्छेदकरूपेणबोधिकाजहत्स्वार्था, यथाद्रव्यत्वविशिष्टबोधिकानीलघटत्वविशिष्टबोधिका घटपदस्येतिदिङ्मात्रंप्रदर्शितम् । विस्तरस्त्वन्यत्र द्रष्टव्यः ॥ इतरान्वितोघटोघटपदवाच्य इति । इतरत्वसमानाधिकरणधर्मावच्छिन्नविषयत्वनिष्ठविषयतानिरूपितनिरूपितत्वनिष्ठविषयता निरूपितसांसर्गिकविषयतानिष्ठविषयतानिरूपितनिरूपितत्वनिष्ठविषयतानिरूपितायाघटत्वावच्छिन्नत्वावच्छिन्नघटपदजन्यबोधविषयत्वप्रकारतातन्निरूपितविशेष्यतावान्घटइत्येताद्दशशक्तिमानित्यर्थः । तन्मतेइतरत्वसमानाधिकरणधर्मावच्छिन्नविषयतानिरूपितसांसर्गिकविषयतानिरूपितघटत्वावच्छिन्नघटपदजन्यबोधविषयतावानभवतीति तादृशसंसर्गकविषयतायाश्शक्तित्वादितिभावः ।

दार्थान्तरस्यपदान्तरलभ्यतयातदंशानुतभाविणशक्तिग्रहस्यानुपयुक्तत्वात् । नचान्वयस्यपदवाच्यत्वेतदंशेशक्तिग्रहस्यशाब्दबोधोपयोगित्वे चमानाभावइतिवाच्यम् । तद्विषयकशाब्दबोधंप्रतिवृत्तिज्ञानजन्यतदुपस्थितेर्हेतुतायाः सामान्यतःक्लृप्ततयावृत्तिज्ञानादनुपस्थितोतस्यशाब्दबोधविषयत्वासंभवाद् अन्वयांशेशक्तिग्रहस्यापिशाब्दबोधेअपेक्षणीयत्वात् । संसर्गताभिन्नविषयतायास्तादृशोपस्थितिजन्यतावच्छेदकत्वे गौरवात् । अत्रवदन्ति । सामान्यतस्तद्विषयकतादृशशाब्दबोधेवृत्तिज्ञानजन्यतदुपस्थितित्वेनमहेतुतास्वतन्त्रवृत्तिज्ञानाद्विशृङ्खलभावेनैकपदोपस्थापितयोःपदार्थपदार्थतावच्छेदकयोर्विशेष्यविशेषणभावक्रमेणशाब्दबोधापत्तेः। किंतुतद्धर्मप्रकारेणतद्विषयकशाब्दबोधेवृत्ति ज्ञानजन्यतद्धर्मावच्छिन्नतद्विषयकत्वेनैवहेतुतावाच्या । एवंचतत्संसर्गकबोधस्यकिंचिद्धर्मप्रकारेणतद्विषयकत्वाभावाद्वृत्तिज्ञानात्तदनुपस्थितावपितत्संसर्गकः शाब्दबोधः संभवत्येव । वस्तुत-

---

द्वितीयकल्पेचसंसर्गत्वसमानाधिकरणधर्मावच्छिन्नसांसर्गिकविषयतानिरूपिततादृशविशेष्यतानिवेश्यतेइति । नचसंसर्गेशक्तिमत्त्वेपिसंसर्गतावच्छेदकेशक्तिविरहात् कथंतस्यशाब्दबोधेभानमितिवाच्यं, तन्मतेसंसर्गस्यस्वरूपतोभानात् । स्वतन्त्रवृत्तिज्ञानादिति । लोमवल्लाङ्गूलंपशुपदशक्यंतद्वृत्तिःपशुपदशक्येत्येवंशक्तिज्ञानाद् उपस्थितयोर्लोमवल्लाङ्गूलतदाश्रययोरित्यर्थः। तद्धर्मप्रकारेणतद्विषयकशाब्दबोधइति । नचतद्धर्मप्रकारकतद्विशेष्यकशाब्दबोधेवृत्तिज्ञानजन्यतद्धर्मावच्छिन्नविष-

स्तुशक्त्यालक्षणयावोपस्थितस्यतत्तदर्थस्यशाब्दबोधेभा-
नादुभयविधतत्तदर्थोपस्थितेरेवतद्विषयकशाब्दबोधे
हेतुतावाच्या । तादृशोपस्थित्योस्त्वानुगतानतिप्रसक्त-
स्यकारणतावच्छेदस्यागुरोर्दुर्वचतयाव्यभिचरवारणा-
यशक्त्यादिज्ञानजन्योपस्थितिजन्यतावच्छेदककोटौ
तत्तत्कारणाव्यवहितोत्तरत्वनिवेशआवश्यकः । इत्थं-
चवृत्त्यनुपस्थितस्यापिसंसर्गस्यशाब्दबोधोपगमेव्यभि--
चाराप्रसक्त्याऽन्वयस्यपदार्थवाच्यत्वेपिनकिंचिद्बाधक-
मितिकिंतत्रवृत्तिकल्पनेन। नचशक्तिलक्षणयोर्वृत्ति-
त्वेनानुगमसंभवात्तदुभयविषयकज्ञानजन्योपस्थित्यो-
रेकरूपेणैवहेतुतयानोक्तव्यभिचारप्रसक्तिरितिवाच्य-
म् । उभयसाधारणवृत्तित्वस्यानुगतस्यदुर्वचत्वात् ॥
*यत्तु शक्तिविषयकज्ञानजन्यतदुपस्थितित्वेनैवशक्तिल-
क्षणाधीनपदार्थोपस्थित्योरनुगमसंभवः । घटशक्तंघ-
टपदमित्ये तादृशज्ञानजन्योपस्थितेरिवघटसबन्धिश-
क्तंपटपदमित्यादिलक्षणाज्ञानजन्योपस्थितेरपिघटा--
दिसंबन्धिपटादिनिरूपितशक्तिविषयकज्ञानजन्यत्वा-
दितिनोक्तव्यभिचारप्रसक्तिरिति । नचपटशक्तंपटप-
दमित्यादिज्ञानजन्यपटाद्युपस्थितौयत्नोद्बोधकाद्घ-
टादिभानंतादृशघटादिविषयकोपस्थितेरपिघटादि-

यकोपस्थितिरवेनहेतुत्वेघटवद् भूतलमित्यादिवाक्याद्घटप्र-
कारकभूतलविशेष्यकबोधोत्पत्त्यावृत्तिज्ञानजन्यघटावच्छिन्न-
भूतलविषयकोपस्थितेरभावाद्व्यभिचारइतिवाच्यम् । विधेय-
ताभिन्नतन्निष्ठप्रकारताकतद्विषयकशाब्दबोधत्वस्यजन्यताव--
च्छेदकत्वात् तथाचोक्तस्थलेघटस्यविधेयतयानव्यभिचारः । न-

शाब्दबोधजनकत्वापत्तिरितितद्विषयकशाब्दबोधेतदर्थ-
विशेषितशक्तिविशिष्टपदविषयकज्ञानजन्यतदुपस्थि--
तित्वेनहेतुतावाच्या । तथा चनतेनरूपेणघटसंबन्धि-
शक्तं पटपदमित्यादिज्ञानजन्यघटाद्युपस्थितेःसंग्रह--
इत्युक्तव्यभिचारोदुर्वारएवेतिवाच्यम् । शक्तिविषय-
तावच्छिन्नप्रकारताप्रतियोगिकतद्विषयकत्वावच्छि-
न्नकार्यताशालित्वेनोपस्थितेस्तच्छाब्दबोधेहेतुतयाद-
र्शितोद्बोधकान्तरप्रयोज्यघटादिविषयताकोपस्थिते-
र्निरुक्तकार्यताशालित्वविरहेणोक्तातिप्रसङ्गानवका---
शात्तदर्थविशेषितशक्तिविषयतापर्यन्तस्योपस्थितिनि-
ष्ठप्रकारतावच्छेदकेऽनिवेशादनुगमसंभवात् । उक्त-
लक्षणाज्ञानजन्यहेतुतायामपिशक्तिविषयतायाअवच्छे-
दकप्रवेशादिति । तन्नसमीचीनम् । उक्तानुगतरूपे-
णपदार्थोपस्थितेर्हेतुत्वेघटकालीनायाशक्तेस्तद्वत्पट-
पदमित्यादिज्ञानजन्यघटाद्युपस्थितितोऽपिघटादिशा-
ब्दबोधप्रसङ्गात् । तत्कालीनशक्तिरूपपरंपरासंबन्धवि-
षयतान्तःपातिन्याःशक्तिविषयतायाअपितादृशसंब-
न्धप्रयोज्यघटादिविषयताप्रयोजकत्वात् । तादृशश-
क्तिविषयकधियोघटादिनिरूपितत्वोपरागेणतत्सं--
बन्धिनिरूपितत्वोपरागेणचपदेशक्त्यनवगाहितयाशा-

---

चतथापिविधेयताभिन्नतन्निष्ठविषयतानिरूपिततन्निष्ठविषय-
ताकशाब्दत्वस्यैवजन्यतावच्छेदकत्वमुच्यतां किंप्रकारतानिवे-
शेनेतिवाच्यम् । घटपदाद्घटनिष्ठविशेष्यतात्मकविषयतानि-
रूपितघटत्वनिष्ठविषयताकशाब्दबोधोत्पत्त्याव्यभिचारादिति ।

ब्दबोधप्रयोजकतच्छक्तपदज्ञानतज्ज्ञाप्यविषयकपदज्ञाना-
नात्मकतयातज्जन्योपस्थितेः शाब्दबोधजनकत्वेष्ट--
ष्टापत्त्यसंभवात् । नचकिंचिन्निरूपितत्वोपरक्तशक्ति-
विषयताप्रयोज्यतत्तदर्थविषयताकोपस्थितित्वेनशा-
ब्दधीजनकत्वोपगमान्नायमतिप्रसङ्गः । उक्तज्ञानी-
यशक्तिविषयतायाः किंचिन्निरूपितत्वविषयतानिरू-
पितत्वविरहादितिवाच्यम् । एवमपिघटकालीनाया
पटनिरूपितशक्तिस्तद्वत्पटपदजन्यघटाद्युपस्थितेरव्या-
वृत्तेः । अथकिंचिन्निरूपितत्वविषयतानिरूपितत्वेनश-
क्तिविषयतायादृशप्रकारतावच्छेदिकातादृशप्रकारता-
ताप्रतियोगिकप्रकृतार्थविषयत्वावच्छिन्नकार्यताशा--
लित्वेनपदार्थोपस्थितेर्हेतुत्वोपगमान्नायमतिप्रसङ्गः ।
शक्तांशेउदासीनस्यपटनिरूपितत्वादेरभानेपिघटकाली-
नशक्तिरूपघटीयपरंपरयासंबन्धविषयकपदज्ञानस्य
घटादिस्मारकतयातत्स्मृतिजनकतायांपटादिनिरू-
पितत्वविषयतानिरूपितत्वस्यशक्तिविषयत्वेऽनिवे---
शादितिचेद् एवमपियत्रघटादेःशक्तत्वसंबन्धेनप--
दांशेप्रकारतातज्जन्योपस्थितितोपिघटादेःशाब्दबो-
धोत्पत्त्यातदनुपपत्तिर्दुर्वारैव । नचपदांशेसंसर्गतया
शक्तेर्भानेशक्तावर्थस्यनिरूपितत्वरूपसंबन्धान्तराभा--
वात्* । वस्तुतोघटत्वाद्युपलक्षितवाचकाद्द्रव्यादिप-
दाच्छक्त्याऽभान्तस्य घटत्वादिप्रकारकशाब्दबोधवार-
णायतद्धर्मप्रकारशाब्दबोधेशक्तौतद्धर्मविशिष्टनिरूपि
तत्वावगाहित्वेनशक्तिज्ञानस्योपयोगितावाच्यातथा
चतत्संबन्धिनोलक्षणायाग्रहस्यतेनरूपेणासंग्रहादननु-

गमेनव्यभिचारप्रसक्तप्रोक्तकार्यकारणभावेकारणानन्तर्यप्रवेशस्यावश्यकत्वम्। एवंशक्तिज्ञानमुभयविधंविनिगमनाविरहाच्छाब्दबोधप्रयोजकंपदेऽर्थवाचकत्वावगाहि पर्थेपदवाच्यतावगाहिचतयोरपिनानुगमसंभवः। वाच्यत्ववाचकत्वयोःशक्तिप्रतियोगित्वशक्त्याश्रयत्वरूपयोर्मिथोविलक्षणसंबन्धरूपतयाऽनुगतानतिप्रसक्तरूपाभावात्। संबधत्वादिनानुगमेतदीयकालिकादिसंबन्धज्ञानादर्थधर्मिकपदवाचकतायाः पदधर्मिकार्थवाच्यतायाश्चज्ञानाच्छाब्दबोधापत्तेः। तज्जन्योपस्थित्योरपिपरस्परजन्यबोधेव्यभिचारः। एवंलक्षणाज्ञानमपिपदेऽर्थसंबन्धिवाचकतावगाहितयाऽर्थेपदसंबन्धिवाच्यतावगाहितयाद्विविधंशाब्दबोधप्रयोजकं तदधीनोपस्थित्योरपिचानतिप्रसक्तरूपेणानुगमासंभवेनपरस्परजन्यशाब्दबोधेव्यभिचारवारणायकार्यतावच्छेदककोटौकारणानन्तर्यप्रवेशोध्रुवएवेत्यवधेयम्। अथशक्त्यनुपस्थितस्यापिपदार्थद्वयसंसर्गस्यशाब्दधीविषयत्वोपगमेसंबन्धभानेनियामकाभावाच्छाब्दबोधेबाधितयावत्संबन्धभानापत्तिरितिचेन्न। कयोश्चित्पदयोःकेनचित्संबन्धेनस्वार्थान्वितबोधएवसाकाङ्क्षतयाकाङ्क्षाज्ञानस्यैवपदार्थसंसर्गभानेनियामकत्वात्। ययोस्तुपदयोर्नानासंबन्धेनस्वार्थान्वयबोधेसाकाङ्क्षातज्जन्यशाब्दबोधेसंसर्गविशेषतात्पर्यज्ञानरूपकारणबलादेवसंबन्धभाननियमोपपत्तेः। नचसंसर्गविशेषानुपस्थितौतात्पर्यज्ञानासंभवेनतदुपस्थितेरावश्यकतयातद्बोधकसंस्कारोद्बोधार्थमेवतत्तद्वृत्तिज्ञानमपेक्षितमितिवाच्यम्। उ-

दुद्बोधकान्तरादुपस्थितेपि संसर्गेतात्पर्यग्रहसंभवात्त-
त्प्रवृत्तिज्ञानस्यानपेक्षितत्वात् । तस्मात् घटत्वगोत्वबि-
शिष्ट एवघटगवादिपदस्यशक्तिः पदार्थद्वयसंसर्गस्तुभा-
काङ्क्षाबललभ्यएवेतिस्थितम् * । घटादिपदानांपदा-
र्थतावच्छेदकीभूतऽघटत्वादिविशिष्टएवशक्तिःनतुत-
दुपलक्षिते । घटत्वादेरुपलक्षणत्वेतस्यद्रव्यत्वाद्यविशे-
षेणघटादिपदाद्द्रव्यत्वादिनानबोधोऽपितुघट त्वादि-
नैवेतिनियमानुपपत्तिः । अथघटत्वादेरिवद्रव्यत्वा-
देरपिवैशिष्ट्यस्यघटादौसत्वाद्घटादिपदशक्तावपिघट-
त्वसामानाधिकरण्यरूपवैशिष्ट्यवद्द्रव्यत्वादिसामाना-
धिकरण्यरूपवैशिष्ट्यस्याप्यक्षततयाघटत्वविशिष्टे शक्ति-
र्नतुद्रव्यत्वविशिष्टइत्यस्यकोर्थः । अतआहुः । तद्विष्टे
शक्तिरित्यस्यतद्धर्मतद्वैशिष्ट्यतदाश्रयेषुत्रिष्वे वशक्तिरि-
त्यर्थः । घटादिशक्तिमतिद्रव्यत्वादिवैशिष्ट्यसत्वे पि
द्रव्यत्वादौतच्छक्तिविरहात्तेषामुपलक्षणता । घटत्वा-
दौतत्सत्वात्तेषांविशेषणता । एवंचप्रवृत्तिनिमित्ते
पिशक्तेस्तस्यापिवाच्यतयावाच्यत्वे सतिवाच्यवृत्तित्वे
सतिवाच्योपस्थितिप्रकारत्वमितिप्रवृत्ति निमित्तलक्षणेवा
च्यत्वेसतीति विशेषणदानं जात्याकृतिव्यक्तयःपदार्थइति-
न्यायसूत्रोक्तं गोत्वादिजातेर्गवादिपदार्थत्वमप्युपपद्यते ।

वाचत्वेसतीति । शब्दाश्रयत्वेशक्यतानभ्युपगन्तृमतेतत्रा-
व्याप्तिवारणायप्रथमंसत्यन्तम् । आकृतेःपदार्थत्वमतेतत्राति-
व्याप्तिवारणायद्वितीयसत्यन्तम् । वाच्यवृत्तित्वञ्चमाधात्सम्ब-
न्धेनग्राह्यम् अतःआकृतेःपरम्परयाघटादिवृत्तित्वेपिनक्षतिः ।

* हरिदासास्तुतत्पदबोध्यत्वप्रकारतानिरूपितविशेष्यता-
संबन्धेनभगवदिच्छावत्त्वमेवतत्पदवाच्यत्वम् । गङ्गा-

अथघटादिपदाद् घटोबोद्धव्य इत्याकारिकायाभगवदिच्छा-
याबोधविशेषविषयतात्वेनबोधविषयतानिष्ठप्रकारता-

नचाकृतेःसाक्षात्सम्बन्धेनघटादिवृत्तित्वसत्त्वात्तद्दोषतादवस्थ्य-
मितिवाच्यम् । आकृतेर्घटादिपदजन्यशाब्दबोधेघटादिरूपवा-
च्येयेनसम्बन्धेनप्रकारत्वंतादृशसम्बन्धेनवाच्यवृत्तित्वस्यविवक्षि-
तत्वात् । दधिपदप्रवृत्तिनिमित्तलक्षणस्यस्थूलदध्यादावतिव्या-
प्तिःस्थूलदध्यादेस्तदवयवदधिसमवेतत्वात् दधिपदवाच्यत्वाच्च

दिपदजन्यबोधविषयत्वप्रकारतानिरूपितविशेष्यतायामुख्यार्थं-
प्रवाहादावेवेश्वरेच्छासंबन्धत्वंनतीरादाविति नतीरादौगङ्गाप-
दवाच्यतापत्तिः। नचतीरादौनतत्संबन्धत्वमित्यस्यनतीराद्यनु-
योगिकसम्बन्धत्वमर्थःसचनसंगच्छतेतादृशविशेष्यतायास्तीरा-
दावपिसत्त्वात्तीरानुयोगिकत्वस्येश्वरेच्छाप्रतियोगिकत्वस्यत-
त्रसत्त्वादितिवाच्यम् । तीरादौनतत्सम्बन्धत्वमित्यस्यनतीरा-
नुयोगिकत्वावच्छेदेनतत्प्रतियोगिकत्वमित्यर्थकतयाऽनुपप-
त्तिविरहात् । यथाहिसमवायैक्यमतेएकस्मिन्नेवरूपप्रतियोगि-
कत्वघटानुयोगिकत्वोभयसत्त्वेऽपितन्निष्ठसामानाधिकरण्यमा-
त्रंनत्ववच्छेद्यावच्छेदकभावाख्यसम्बन्धइतिनघटादेरूपादिम-
त्त्वं, तथागङ्गापदजन्यबोधविषयत्वप्रकारतानिरूपितविशेष्य-
तायाईश्वरेच्छाप्रतियोगिकत्वतीरानुयोगिकत्वोभयसत्त्वेऽपिन
तयोरवच्छेद्यावच्छेदकभावइतिनतीरादेर्गङ्गापदवाच्यत्वम् । के-
चित्त्ववच्छेद्यावच्छेदकभावानङ्गीकारेऽपिवायूरूपवानिति ज्ञान-
स्यैकसमवायसत्त्वेऽपिरूपात्मकसंबन्धसत्त्वादत्रापितादृशविशेष्य-
तासत्त्वेऽपिपटपदादेर्घटादावभानेनापत्त्यभावात् । तादृशसम्बन्धे-
नपटपदवत्त्वमेवपटपदवाच्यत्वमित्याशयस्तेषाम् ॥ पा० ॥

निरूपितविशेष्यताघटएवनतु घटत्वादौ विषयतामात्रं चवस्तुमात्रएवेतिकथं घटपदशक्तिर्घटत्वादिविषयेवेतिनियमइतिचेदीश्वरेच्छायास्तत्पदजन्यशाब्दबोधविषयताप्रयोजकः संबन्धएवतत्रतत्पदशक्तिरितिव्यपदेशनियामको घटपदाद्घटोबोद्धव्यइत्यं ताद्दशेच्छायांच घटत्वावच्छेदेनबोधविषयत्वमवगाहमानायांसमवायावच्छिन्नंबोधविषयतावच्छेदकत्वं घटत्वेसमवायेनघटत्वाद्यवच्छेदकत्वं वाविषयतायांसंसर्गमर्यादयाभासते। एवंचाश्रयत्वसंबन्धावच्छिन्नबोधविषयत्वप्रकारतानिरूपितविशेष्यत्वंघटस्य। अवच्छेदकत्वसंसर्गावच्छिन्नाघटविशेषणतापन्नबोधविषयत्वस्यया प्रकारतातन्निरूपितविशेष्यत्वंघटत्वस्य,घटविशेषणतापन्नबोधविषयत्वांशेऽवच्छेद्यत्वसंबन्धेनप्रकारत्वंवाघटत्वस्य। घटत्वबोधविषयत्वयोःसंसर्गविधयाभासमानत्वंसमवायस्येतित्रितयमेवघटपदजन्यबोधविषयतायामुपयुज्यतेइतित्रयाणांवाच्यतोपपत्तिः। घटघटत्वसंसर्गेषुसंकेतविषयतानां मिथोवैलक्षण्येऽपितन्निरूपकबोधविषयतायाऐक्याच्छक्त्यैक्यप्रवादःनतुसंकेतैक्याच्छक्तत्वशक्यतावच्छेदकभेदेनापिशक्तिभेदानुपपत्तेः भगवत्संकेतस्यैक्यात्। तदंशेआश्रयत्वसंबन्धावच्छिन्नबोधविषयत्वप्रकारतानिरूपितसंकेतविषयतावगाहिज्ञानस्यैवपदार्थान्तरान्वयबोधोपयोगित्वमितिशक्तिभ्रमंविनानपदार्थतावच्छेदकेप-१

---

अतोविशेष्यदलम्। तदंशेआश्रयत्वसम्बन्धेनेति। आश्रयत्वसम्बन्धःस्वरूपसम्बन्धः। नपदार्थतावच्छेदकेपदार्थान्तरान्वयइति।

पार्थान्तरान्वयः ॥ यत्तु तदंशे संकेतमुख्यविशेष्यताग्र-
हस्तदेतरान्वयबोधप्रयोजकः । लोमादिमान् पशुपदाद्
बोद्धव्य इत्याकारकसंकेते लोमाद्यंशे बोधविषयातायाः

घटो नित्यः पशुर्नपशुरित्यादौ घटत्वे नित्यत्वस्य लोमादौ पशुभे-
दस्याबाधितत्वेऽपि नान्वयबोध इत्यर्थः । अथ पदार्थोपस्थितियोग्य-
ताज्ञानादिसत्त्वे नकथं न पदार्थान्तरान्वयबोधः कार्यकारणभा-
वं विना कथामात्रेण वारयितुमशक्यत्वात् । अन्यथा तत्पूर्ववर्ति-
उदासीनघटज्ञानादेरपि प्रयोजकत्वापत्तिः । अत्र केचित् ।
आश्रयत्वसम्बन्धावच्छिन्नयत्किञ्चित्पदजन्यशाब्दबोधविषयत्व-
प्रकारतानिरूपितविशेष्यताश्रयांनिष्ठप्रकारतानिरूपितविशेष्य-
तासंबन्धस्तेन शाब्दत्वावच्छिन्नं प्रति आश्रयत्वसम्बन्धावच्छिन्नयत्
किञ्चित्पदजन्यशाब्दबोधविषयत्वप्रकारतानिरूपितविशेष्यता-
ग्रहस्य विशेष्यतासम्बन्धेन हेतुत्वोपगमात् न घटत्वलोमादौ प-
दार्थान्तरनित्यत्वपशुभेदान्वयः । एतादृशकार्यकारणभावग्राह-
कमेव तादृशं वाक्यम् । न च गङ्गापदलक्ष्यतीरादौ पदार्थान्तरान्व-
यानुपपत्तिः तत्राश्रयत्वसम्बन्धावच्छिन्नयत्किञ्चित्पदजन्यबोध-
विषयत्वप्रकारतानिरूपितविशेष्यताग्रहस्य विशेष्यतासम्बन्धे-
नासत्त्वादिति वाच्यम् । ज्ञाने तत्पुरुषीयत्वानिवेशाद्न्ततो-
भगवतस्तीरादिपदजन्यबोधविषयत्वप्रकारतानिरूपितविशेष्य-
ताग्रहस्य विषयतासम्बन्धे न तत्र सत्त्वादित्याहुस्तन्न । ज्ञाने तत्पुरु-
षीयत्वानिवेशे पशुर्नपशुरित्यादौ पदार्थतावच्छेदकलोमादौ प-
शुभेदान्वयापत्तेर्दुर्वारत्वात् तत्राप्यन्ततो भगवतो लोमादिपद-
जन्यबोधवियत्वप्रकारतानिरूपितविशेष्यताग्रहस्य विशेष्यता-
सम्बन्धेन सत्त्वात् । परे तु सद्विशेष्यककिञ्चित्पदार्थप्रकारकज्ञा-

ब्दबुद्धित्वावच्छिन्नं प्रति तदवच्छिन्नविशेष्यताकाश्रयत्वसम्बन्धावच्छिन्नपदजन्यशाब्दबोधविषयत्वप्रकारतानिरूपितविशेष्यताग्रहत्वेन सामानाधिकरण्यप्रत्यासत्त्या प्रतिबन्धकत्वकल्पनात् नपदार्थतावच्छेदकघटत्वस्य लोमादौ पदार्थान्तरान्वयः । न च लक्ष्यतावच्छेदकेऽपि पदार्थान्तरान्वयस्याव्युत्पन्नतया घटादियत्किञ्चित्पदलक्ष्यतावच्छेदकलोमादौ पदार्थान्तरान्वयापत्तिः तच्च लोमाद्यवच्छिन्नविशेष्यताकतादृशविषयत्वप्रकारतानिरूपितविशेष्यताग्रहस्याभावादिति वाच्यम् । तद्विशेष्यकपदार्थान्तरप्रकारकान्वयबोधं प्रति तदवच्छिन्नविशेष्यकलक्षणाग्रहत्वेनापि प्रतिबन्धकत्वकल्पनात् । न च पशुपदजन्यस्य लोमपदजन्यस्य लोम्नि लाक्षणिकघटादिपदजन्यस्य * लोमादिमानेकत्ववाल्लोम एकत्ववदिति समूहालम्बनेन शाब्दबोधे *लोमादिमति लाक्षणिकघटादिपदजन्यस्य वा लोमत्वलाक्षणिकपदजन्यस्य लाक्षणिकलोमपदजन्यस्य वा तादृशसमूहालम्बनेन बोधे लोम्नि एकत्वभानानुपपत्तिरिति वाच्यम् । तद्विशेष्यकपदार्थान्तरप्रकारकशाब्दबोधे तद्धर्मिकशक्तिग्रहाभावविशिष्टस्य तद्धर्मिकलक्षणाग्रहाभावविशिष्टस्य तदवच्छिन्नविशेष्यकतादृशप्रकारतानिरूपितविशेष्यताग्रहस्य तादृशतादृशग्रहाभावविशिष्टस्य तदवच्छिन्नविशेष्यकलक्षणाग्रहस्य च प्रतिबन्धकत्वकल्पनात् । न च यत्र लोमत्वेन लोमावच्छिन्नविशेष्यकतादृशविशेष्यताग्रहः शाब्दबोधे च लोमत्वेनैव घटादिभानं तत्र लोमत्वेन घटपदार्थान्वयप्रसङ्गः तत्र घटत्वावच्छिन्नविशेष्यकतादृशविशेष्यताग्रहाभावादिति वाच्यम् । यत्र यत्किञ्चित्तदवच्छिन्नाशक्यतावच्छेदकतात्वशक्यतावच्छेदकतायां तादृशधर्मावच्छिन्नातदवच्छिन्नविशेष्यताकतादृशग्रहं प्रति तदवच्छिन्नावच्छेदकताकतादृशग्रहस्य प्रतिबन्धकत्वात् । तत्र स्वरूपतो घटत्वादेर्घटा-

दिपदशक्य ।।वच्छेदकतातदनुरोधितद्विशेष्यकताहशशाब्द-
बोधंप्रतिस्वरू।तस्तदवच्छिन्नविशेष्यताकताहशग्रहस्यप्रतिब-
न्धकत्वकल्पनम्  एवंपदार्थतावच्छेदकतावच्छेदकेलोमादा-
वितरान्वयबोधवारणायतद्विशेष्यकशाब्दबोधितदवच्छिन्नावच्-
छेदकताकविशेष्यताकताहशग्रहत्वेनप्रतिबन्धकत्वंकल्पनीय-
म् । एवमन्यत्राप्यूहनीयम् । नचैतावतालोमविशेष्येतरा-
न्वयबोधवारणेपिपशुभेदादौसामान्यसामग्रीतः साधेयतासम्ब-
न्धे नलोमादिप्रकारताकान्वयबोधापत्तिर्दुर्वाराभेदविशेष्यके-
तरान्वयबोधितदवच्छिन्नविशेष्यकताहशग्रहरूपप्रतिबन्धका-
भावादितिवाच्यम् । इतरविशेषणतयोपस्थितस्यान्यत्रविशे-
षणतयानन्वयित्वरूपनियमान्तरेणतस्यवारणीयत्वादितिप्राहुः।
वस्तुतस्तुपदार्थतावच्छेदकलोमादिधर्मिकेतरान्वयबोधस्याप्र-
सिध्यासामान्यसामग्र्याएवकार्य्योत्पत्तिव्याप्यत्वात्  यत्रपशु-
पदस्यलोम्निलक्षणाशक्तिभ्रमोवातत्रपशुर्नपशुरित्यतोलोम्निपशु-
भेदान्वयप्रसिद्धिरितिचेत्तत्स्थलीयसामग्र्यालोम्निशक्तिभ्रमलक्षणा-
ग्रहघटिततयातत्स्थलीयसामग्र्यालोमावच्छिन्नवाचकपशुपद-
घटितताहशवाक्यस्थलेऽभावात् नताहशबोधोपपत्तिरिति, यत्र-
पशुर्नपशुरितिवाक्यघटकैकपशुपदस्यलोम्निशक्तिभ्रमोलक्षणाग्र-
होवापरपशुपदस्यलोमावच्छिन्नवाचकतातत्रलोमपशुभिन्नमि-
तिवत्पशुभिन्नंयत्लोमतद्वानितिबोधापत्तिः  ताहशसाम-
ग्र्यास्तत्रापिसत्वादितिचेत्ताहशबोधस्याप्रसिद्धेरनापत्तिः  पशु-
भिन्नलोमादिवाचकतदादिपदघटिततद्वानितिवाक्यतस्तत्प्रसि-
द्धिरितिचेत्तत्स्थलीयसामग्र्याविलक्षणानुपूर्वीप्रकारकज्ञाना-
घटिततयाताहशसामग्र्यास्तत्रासत्वात्नकाप्यनुपपत्तिः ।
एवम्पशुसुन्दरमित्यादौक्वचित्सौदर्य्यादिपदार्थतावच्छेदकेत-

प्रकारकत्वेपिलोमादेर्धर्मिविशेषणतापन्नस्यैवताद्दशवि-
षयताविशेष्यत्वं नतुमुख्यविशेष्यत्वमत:शक्तिभ्रमंविना
नलोमादिनापदार्थान्तरान्वयइतिताद्दशबोधविषय-
त्वप्रकारतायामाश्रयत्वसंसर्गावच्छिन्नत्वविशेषणमन-
र्थकमिति । तन्न । लोमपशुपदजन्यबोधविषयतावच्छे-
दकभवत्त्वत्वादिसंकेतविषयतातदवच्छेदकतासं-
सर्गकताद्दशबोधविषयत्वप्रकारकसंकेतमुख्यविशेष्यंलो-
मेतिज्ञानाल्लोमादिमुख्यविशेष्यकशाब्दबोधानुदया-
दाश्रयतासंबन्धावच्छिन्नत्वे नताद्दशशाब्दबोधविषय-
त्वप्रकारतायामवश्यंनिवेशनीयतयातत्रलोमावच्छि-

रान्वयबोधसंभवेपिनक्षति: ताद्दशबोधस्यपारमार्थिकतयात-
त्रताद्दशानुपूर्वीविशेषप्रकारकज्ञानघटितसामग्र्या:प्रयोजक-
त्वादितिसुधीभिर्वाच्यम् । प्रकारत्वेपिति ॥ अवच्छेदकत्वसम्ब
न्धेनेत्यादि । नतुमुख्यविशेष्यत्वमिति । प्रकारतानवच्छिन्नविशे-
ष्यतायाएवमुख्यविशेष्यतात्वादितिभाव:।तन्नेति । अथलोमपशु-
पदजन्यबोधविषतावच्छेदकंभवत्वेताद्दशाधुनिकसंकेतज्ञानस्य
लोमादिमानित्याकारकशाब्दबोधहेतुत्वंदुर्घटंलोमादिमदंशेता-
द्दशसंकेतविषयतायाअसत्त्वात् लोमादिमदंशेशाब्दबोधविषता-
प्रयोजकस्यतदंशेसंकेतविषयताकज्ञानस्यासत्त्वादेवंताद्दशाधु-
निसंकेतज्ञानस्यताद्दशशाब्दबोधहेतुत्वेलोमादिमतिभवन्मत-
सिद्धेतरान्वयप्रयोजकस्यतदंशेआश्रयत्वसम्बन्धावच्छिन्नबोध-
विषत्वप्रकारतानिरूपितसंकेतविषयताशालिज्ञानस्यासत्त्वात्
एवंताद्दशसंकेतविषताज्ञानात् भवन्मतेतदितरान्वयबोधाप-
पत्तिरेवंलोमत्वावच्छिन्नधर्मिकताद्दशसंकेतविषयताज्ञानात्लो-

न्नविशेष्यकबोधस्यैवसंकेतविषतयाग्रहेणान्याद्दशबो-
धोत्पत्तेरनुभवविरुद्धतयेष्टापत्तेरयोगात् । एवंचपदा-
र्थःपदार्थेनान्वेतिनतुपदार्थैकदेशेनेत्यत्रपदार्थत्वंबोध-
विषयताश्रयत्वेनसंकेतविषयत्वम् । एकदेशत्वञ्चबो-

मादिमतोनुपस्थित्याकथंवाताद्दशसंकेतज्ञानात्लोमादिमतः-
शाब्दबोधः, हस्तीहस्तिपकसम्बन्धीत्याकारकज्ञानाद्धस्तिमतो-
ऽस्मृतेरिवताद्दशसंकेतविषयतात्मकसम्बन्धज्ञानात् लोमादि-
मतःस्मृतेरनुभवविरुद्धत्वादितिताद्दशसंकेतज्ञानस्यताद्दशशा-
ब्दबोधहेतुत्वंभवताऽपिनस्वीकार्यमित्येतन्मतेऽपिनतद्दोषदू-
तिमहदसमञ्जसम् । मैवं, लोमादिमन्निष्ठायापशुपदजन्यशाब्द-
बोधविषयतातदवच्छेदकंभवत्वित्याकारकाधुनिकसंकेतस्वी-
कारात्नप्रथमदोषःआश्रयत्वसम्बन्धावच्छिन्नबोधविषयत्वप्र-
कारतानिरूपितसंकेतविषयताज्ञानस्येतरान्वयबोधप्रयोजक-
त्वमितियदुक्तंतत्राश्रयत्वंनस्वरूपसम्बन्धःकिन्त्वाधेयतानिरू-
पितस्वरूपसम्बन्धावच्छिन्नाधिकरणत्वंसर्वंचताद्दशाऽधिकरण-
त्वस्यैवसंसर्गतयाभानोपगमात् । तथाचबोधविषयत्वविषय-
तानिरूपितस्वरूपसम्बन्धावच्छिन्नाधेयत्वविषयतानिरूपितसं-
केतविषयताग्रहएवेतरान्वयबोधप्रयोजकःएवञ्चलोमलोमादि-
मन्निष्ठपशुपदजन्यबोधविषयतावच्छेदकंभवत्वित्याकारकसंके-
तेबोधविषयत्वेस्वरूपसम्बन्धावच्छिन्नाधारतानिरूपिताधेय-
तासंसर्गेणलोमादिमतोभानेननद्वितीयदोषस्यावकाशः । अन्य-
थाघटपदंघटविषयकबोधजनकंभवत्वित्याकारकसंकेतज्ञानस्या-
पिभट्टाचार्यमतेहेतुतयाताद्दशसंकेतग्रहस्थलेताद्दशानुपपत्तिर-
शक्यसमाधिरेवेतितत्रापिताद्दशरीत्यैवानुपपत्तिःपरिहरणी-

धविषयतावच्छेदकत्वेन तथात्वरूपं तच्छक्यतावच्छेदकइत्यवधेयम्।

---

या। एवंलोमादिमानाधेयतासम्बन्धेन लोमविशिष्टमुख्यविशेष्यतानिरूपितावच्छेदकत्वसम्बन्धावच्छिन्नपशुपदजन्यबोधविषयत्वप्रकारत्वावच्छिन्नायाऽधिकरणत्वसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतावानित्याकारकसंकेतविषयताग्रहोपगमेन नता तादृशज्ञानजन्यलोमादिमद्विशेष्यकपदार्थोपस्थितेरनुपपत्तिरितिमद्वतीयदोषःपदमादधातीतिसुधीभिर्ध्येयम्। इदंत्ववधातव्यम्। भट्टाचार्याननुयायिभिःप्राचिनैरेवसर्वत्राधिकरणत्वस्यसंसर्गतायाःस्वीकरणीयतयातदन्वयिभिर्नव्यैःसर्वत्राधिकरतायाःसंसर्गत्वस्यास्वीकरणीयतयाऽऽश्रयत्वस्यस्वरूपसंसर्गपरतयातादृशसंकेतग्रहस्यशाब्दबोधहेतुत्वेनभट्टाचार्यमतेतन्नेतरान्वयबोधप्रयोजकोघटएवेत्यकामेनापिभट्टाचार्यानुयायिना तादृशसंकेतग्रहस्यशाब्दबोधहेतुत्वमुपगन्तव्यमितिसंकेतमुख्यविशेष्यताग्रहस्य इतरान्वयबोधप्रयोजकत्वमतेपिनदोषः परन्तु घटपदंघटविषयकबोधजनकंभवत्वित्याकारकसंकेतग्रहस्यशाब्दहेतुतयाःसर्वानुभवसिद्धतयातादृशसंकेतमुख्यविशेष्यतायाः पदएवसत्त्वेनतन्नेतरान्वयबोधप्रयोजकोदुर्लभः। नचस्वमतेऽपितन्नेतरान्वयबोधप्रयोजकोदुर्लभइतिवाच्यम्। स्वरूपसम्बन्धावच्छिन्नतादृशविषयतानिरूपितविषयताग्रहतादृशविषयतानिरूपिताधेयसम्बन्धावच्छिन्नविषयताग्रहयोरन्यतरस्येतरान्वयबोधप्रयोजकत्वोपगमात्। एवञ्चलोमादिमन्निष्ठपशुपदजन्यबोधविषयतावच्छेदकंभवत्वित्याकारकसंकेतग्रहस्यशाब्दबोधप्रयोजकत्वोपगमेऽपिभट्टाचार्यमतेऽपिनदोषइतिचेद् एवमप्येतन्मतेऽपितादृशमुख्यविशेष्यताग्रहतादृशग्रहयोरन्यतरस्यप्रयोजक-

दकद्वत्यवधेयम् । अथघटत्वाद्यवच्छिन्नेद्रव्यपदशक्त्य-
वगाहिप्रमातोघटत्वादिप्रकारकघटादिपदशक्तिप्रमा-
तः कालिकादिसंबन्धेनघटत्वादिप्रकारकस्यशाब्दबो-
धस्यवारणायतत्संबन्धेनतद्धर्मप्रकारकशाब्दबोधं प्रति-
तेनसंबन्धेनतद्धर्मविशिष्टांशेपदवाच्यत्वावगाहिज्ञानं
कारणंवाच्यम् । विशिष्टांशेपदवाच्यतावगाहित्वं
चविशेषणीभूततत्तत्संबन्धतत्तद्धर्म्यंशेतदवगाहित्वंवा-
च्यन्नतुतेनसंबन्धेनतद्धर्मंधर्मितावच्छेदकीकृत्यैवतद-
वगाहित्वंघटत्वादिकंधर्मितावच्छेदकीकृत्यद्रव्यादि-
पदशक्तिज्ञानस्यापिकालिकसंबन्धेनघटत्वादिकंधर्मि-
तावच्छेदकीकृत्यघटादौघटपदशक्तिग्रहस्यापिचप्र-
मात्वेनोक्तातिप्रसङ्गावारणात् । एवमपिघटत्वांशे-
निर्धर्मितावच्छेदककात्प्रमेयत्वादिधर्मितावच्छेदकका-
त्तघटादिपदनिरूपितवाच्यताग्रहात्तत्प्रकारकबोधवा-
रणायस्वरूपतोघटत्वादिप्रकारकबोधेघटत्वत्वाद्यवच्छि-
न्नधर्मिकवाच्यत्वग्रहापेक्षोपेया । तथाचघटत्वत्वाद्यनु-
पस्थितिदशायांशाब्दबोधानुपपत्तिः । नचघटपदांशेघ-
टादिवाचकत्वज्ञानमेवहेतुः । एवंचस्वरूपतोघटत्वादि-
प्रकारकबोधेवाचकतांशेस्वरूपतोघटत्वादिप्रकारकज्ञान-
स्यैवहेतुत्वमितिघटादिपदजन्यबोधेघटत्वत्वाद्युपस्थितेर्ना-

त्वोपगमेकोदोषइति । द्रव्यपदशक्यत्वावगाहिप्रमातइति ।
घटत्वावच्छिन्नेद्रव्यपदशक्यत्वेभ्रमवतोद्रव्यादिपादादघटत्वा-
वच्छिन्नप्रकारकशाब्दबोधार्थंघटत्वावच्छिन्ने द्रव्यादिपदशक्ति-
ज्ञानस्यहेतुत्वमावश्यकमेवंचतादृशज्ञानस्यप्रमातयाऽभ्रान्तस्या-
पितादृशज्ञानात्घटादिप्रकारकशाब्दबोधापत्तिरितिभावः ।

पेक्षे तिवाच्यम् । एवमपिघटादिपदांशेसमवायवाचकताप्रकारकज्ञानस्यशाब्दबोधेघटत्वादिसंबन्धतया स्वरूपतःसमवायभानप्रयोजकतायावाच्यतयासमवायवाचकताज्ञानेचवाचकतांशेस्वरूपतःसमवायस्य प्रकारत्वासंभवेननित्यसंबन्धत्वरूपसमवायत्वेनैव समवायावगाहितायाउक्तसमवायभानप्रयोजकत्वस्यापियतयातदनुपस्थितिदशायांघटादिपदाच्छाब्दबोधानुपपत्तिरितिचेन्न । तत्सम्बन्धेनतद्धर्मप्रकारकशाब्दबोधेतत्संसर्गाविच्छिन्नतद्धर्मनिष्ठावच्छेदकताकस्वजन्यबोधविषयत्वप्रकारतानिरूपितेच्छाविशेष्यतात्वावच्छिन्नसंसर्गकतत्सम्बन्धावच्छिन्नतद्धर्मनिष्ठधर्मितावच्छेदकताकपदप्रकारकज्ञानत्वेनविषयता-

---

स्वरूपतोघटत्वप्रकारकबोधेवाचकतांशेस्वरूपतोघटत्वादिप्रकारकज्ञानस्यैवहेतुत्वमिति। घटपदंघटत्ववाचकमित्याकारकज्ञानविषयस्यघटत्ववाचकत्वस्यघटत्वनिष्ठविषयतानिरूपितावच्छिन्नत्वविषयतानिरूपितबोधविषयत्वविषयतानिरूपिता या बोधनिष्ठाविषयतातन्निरूपितजनकत्वविषयतानिरूपितविषयतारूपतया।तद्घटकावच्छिन्नत्वविषयतानिरूपकविषयताश्राधेयत्वसम्बन्धेनघटत्वस्यस्वरूपतःप्रकारकत्वंवाच्यं समवायातिरिक्तसम्बन्धेनजत्यादेःस्वरूपतःप्रकारकत्वोगमादितिभावः । समवायवाचकताज्ञानेप्येवंरीत्यासमवायस्यप्रकारत्वंबोध्यम् । स्वरूपतःसमवायस्यप्रकारत्वासम्भवेनेति । जातीतरस्यस्वरूपतः प्रकारत्वानभ्युपगमादितिभावः । तत्सम्बन्धेनतद्धर्मप्रकारकशाब्दबोधेइति । निर्द्धर्मितावच्छेदकताद्रव्यत्वादिधर्मितावच्छे

विशेषसंसर्गकार्थविशेष्यकशक्तिज्ञानस्यहेतुता । ईदृशशक्तिग्रहेचसम्बन्धघटकतयैवावच्छिन्नत्वांशेसमवायभानात्स्वरूपतोपितस्यभानसम्भवेनसमवायत्वोस्थितिर्नापेक्षेतिसामञ्जस्यात् । द्रव्यपदाद्द्रव्यंबोद्धव्यमित्याकारताप्रयोजकद्रव्यपदजन्यबोधविषयत्वीयभगवदिच्छाप्रकारतानघटत्वावच्छिन्नविषयत्वनिष्ठा अपितु द्रव्यत्वावच्छिन्नविषयत्वनिष्ठैवेतिद्रव्यपदजन्यबोधीयघटत्वावच्छिन्नविषयत्वनिष्ठप्रकारतानिरूपितभगवदिच्छानिरूपितविशेष्यतात्वावच्छिन्नसंसर्गेणघटत्वावच्छिन्नांशेद्रव्यपदप्रकारकंज्ञानंसंसर्गतावच्छेदकघटत्वावच्छिन्नांशेभ्रमएवेति । नचद्रव्यपदजन्यविभक्त्युपस्थापितैकत्वादिप्रकारकद्रव्यत्वावच्छिन्नविषयकबोधीयैकत्वावच्छिन्नविषयतासापिद्रव्यपदजन्यबोधीयद्रव्यत्वावच्छिन्नविषयतात्वेनभगवदिच्छाविषयः एवंचद्रव्यपदजन्यबोधीयैकत्वावच्छिन्नविषयत्वनिष्ठप्रकारतानिरूपितविशेष्यतासंबन्धेनैकत्वादिमतोद्रव्यपदवत्त्वाद्द्रव्यपदादभ्रान्तस्यपदान्तरानुपस्थितैकत्वेनप्रकारेणापिशाब्दबोधप्रसङ्गोदुर्वारएवेतिवाच्यम् । *तत्पदजन्यतद्धर्मप्रकारकशाब्दबोधेतद्धर्मा-

---

कत्वान्निरुक्तसंसर्गकघटपदप्रकारताकज्ञानाद्घटत्वादिप्रकारकशाब्दबोधवारणायतत्सम्बन्धावच्छिन्नतद्धर्मनिष्ठधर्मितावच्छे-

---

* एतस्याग्रे ताद्दशविशेष्यतात्वेन संबन्धतानुपगमात् । अथवा इति प्राचीन पुस्तकेष्वधिकः पाठः । तदनुरोधेन टीकायां व्याख्यानम् ।

वच्छिन्नत्वावच्छिन्नत्वेनतत्पदजन्यबोधविषयत्वप्रकारता-
वगाहिताद्दशप्रकारतानिरूपितविशेष्यतासंसर्गकमिच्छा-
प्रकारकंज्ञानंहेतुः । एवंचैकत्वादिप्रकारकद्रव्यादिपदज-
न्यबोधजनकशक्तिग्रहेणद्रव्यादिपदजन्यबोधविष-
यत्वनिष्ठद्रव्यत्वावच्छिन्नत्वेनैवताद्दशविषयत्वमवगा-
हमानायाभगवदिच्छायाःप्रकारतायांद्रव्यत्वमात्रा-
वच्छिन्नत्वेनावच्छिन्नायांबाधितस्यैकत्वावच्छिन्नत्वा-
वच्छिन्नत्वस्यावगाहनात्तस्याभ्रमत्वनिर्वाहेणातिप्रसङ्गा-
नवकाशात् । *यत्तु तद्धर्मप्रकारकशाब्दबोधेस्व-
जन्यबोधविषयत्वप्रकारतानिरूपिततद्धर्मावच्छिन्न-

कताकेति।ताद्दशविषयतात्वेनसम्बन्धतानुपगमादिति। स्वजन्य
बोधीयैकत्वावच्छिन्नप्रकारतानिरूपितविशेष्यतायाद्रव्यपदस्य-
संसर्गतानुपगमादित्यर्थः । ताद्दशविशेष्यतायाद्रव्यपदस्यसंसर्गतानु-
पगमेविप्रतिपन्नंप्रत्याह । यथवेति । भ्रमत्वनिर्वाहेणातिप्रसङ्गा-
नवकासादिति । तथाच भ्रान्तस्यनतादृशशक्तिज्ञानादेक-
त्वावच्छिन्नप्रकारताकशाब्दबोधः भ्रान्तस्यभवत्येवेतिध्येयम् ।
तादृशविशिष्टविशेष्यतासंसर्गताकेति । स्वजन्यबोधविषयत्व-
प्रकारतानिरूपितविशेष्यतासंसर्गताकद्दत्यर्थः ।'द्रव्यपदादगुणा-

* यत्तु पदार्थांशेघटत्वादिधर्मस्यशाब्दबोधप्रकारतायां-
तदंशेतत्पदशक्यतावच्छेदकत्वमेवप्रयोजकम् । शक्यताव-
च्छेदकत्वंचतत्पदजन्यबोधविषयत्वप्रकारतानिरूपितविशे-
ष्यतावच्छेदकत्वम् । नतुबोधविषयतावच्छेदकतयासंकेत-
विषयत्वरूपंविशेषणतयावाच्यत्वम् । तथाचतद्धर्मप्रकारक-
शाब्दबोधेतद्धर्मावच्छिन्नत्वविशिष्टताद्दशविशेष्यतासंसर्गक-

त्वविशेषितविशेष्यतासंसर्गकपदशक्तिज्ञानमेवका-
रणमास्ताम् ॥ ईश्वरीयद्रव्यादिपदसंकेतस्य द्रव्यपदा-
द्द्रव्यम्बोद्धव्यमित्याकारएवनतुद्रव्यपदाद्घटोबोद्ध-
व्यइत्याकारकोघटत्वावच्छिन्नविशेष्यताकइत्युपेय-
ते । तथाचाभ्रान्तस्यनद्रव्यपदाद्घटत्वादिप्रकारक-
बोधप्रसङ्गः । तच्चतत्पदजन्यघटत्वादिप्रकारकबोध-
जनकशक्तिग्रहेणतत्तत्पदजन्यबोधविषयत्वप्रकार-
तानिरूपितविशेष्यतायाबाधितघटत्वावच्छिन्नत्वेना-
वगाहनात्तस्यप्रमात्वासम्भवादितिकिंप्रवृत्तिनिमित्त-
स्यवाच्यत्वोपगमेनेतिशक्यतावच्छेदकमवा-
च्यमेवेतिदीधितिकारमतम् । तन्न । एवंसतिशक्तिज्ञा-
नाधुनिकसंकेतज्ञानयोरेकरूपेणैवहेतुत्वाद्यच्चद्रव्यप-
दाद्गुणवत्त्वादिनाद्रव्यंबोद्धव्यमित्याकारकआधुनि-
कः कस्यचित्संकेतोद्रव्यत्वाद्यवच्छिन्नविशेष्यतासम्ब-

वन्त्वादिनाद्रव्यंबोद्धमित्याकारकइति ॥ द्रव्यंद्रव्यपदजन्यगुणाव-

शक्तिज्ञानमेवकारणमास्तांद्रव्यादिपदजन्यबोधविषयत्वप्र-
कारतानिरूपितद्रव्यत्वावच्छिन्नभगवत्संकेतविशेष्यताया
घटत्वावच्छिन्नत्वेपितस्यास्तादृशप्रकारतानिरूपितद्रव्यत्वा-
वच्छिन्नविशेष्यतात्वेनैवसम्बन्धता । नतुतादृशप्रकारतानि-
रूपितघटत्वाद्यवच्छिन्नविशेष्यतात्वेनेतितादृशप्रकारतानि-
रूपितभगवदिच्छाविशेष्यतायांद्रव्यत्वादेरेवावच्छेदकत्वंनतु-
घटत्वादेरित्येववाच्यमीकरणीयमितिनोक्तातिप्रसङ्गइतिशक्य-
तावच्छेदकेशक्तिंदूषयतांदीधितिकृतांप्रत्यक्षमणिदीधिति-
प्रदर्शितमतं, तन्नशोभनमितिकाचित्कःपाठः ॥

श्येनगृहीतस्तत्तादृशसंकेतग्रहाद् द्रव्यत्वेनद्रव्यबोधापत्तेर्गुणवत्त्वावच्छिन्ने तस्याग्रहाद्भ्रान्तपुरुषस्य गुणवत्त्वादिप्रकारकबोधानुपपत्तेर्दुर्वारत्वाच्च। अथपदार्थांशेदूव्यप्रकारीभूतधर्मांशेवाच्यत्वग्रहस्यापेक्षितत्वे चाकाशपदाच्छब्दाश्रयतयाबोधोनस्याच्छब्दाश्रयत्वस्याकाशपदावाच्यतायाः सिद्धान्तसिद्धत्वात्। अतएवतद्वारणाय

च्छिन्नबोधविषयतावद्भवत्वित्याकारकइति॥ द्रव्यत्वेनद्रव्यबोधापत्तेरिति। द्रव्यत्वप्रकारकशाब्दबोधहेतोर्द्रव्यपदजन्यबोधविषयत्वप्रकारतानिरूपितद्रव्यत्वावच्छिन्नविशेष्यतासंसर्गेणद्रव्यपदवत्ताज्ञानस्यसम्भवात्गुणप्रकारकज्ञानस्यतादृशसंकेतेनावगाहनात्द्रव्यत्वप्रकारकशाब्दबोधस्यानुभवविरुद्धत्वादितिभावः। ननुद्रव्यत्वप्रकारकशाब्दबोधेद्रव्यत्वेतरधर्मावच्छिन्नत्वावच्छिन्नद्रव्यपदजन्यशाब्दबोधविषयत्वप्रकारतानिरूपितद्रव्यत्वावच्छिन्नविशेष्यतासंसर्गकद्रव्यपदवत्त्वज्ञानस्यहेतुत्वोपगमान्न तादृशसंकेतज्ञानाद्द्रव्यत्वप्रकारकशाब्दबोधापत्तिः, संकेतीयद्रव्यपदजन्यशाब्दबोधप्रकारतायाद्रव्यत्वेतरगुणावच्छिन्नत्वावच्छिन्नत्वादित्यतआह। गुणवत्त्वादिप्रकारकशाब्दबोधानुपपत्तेरिति। इदंत्ववधातव्यम्। गुणवत्त्वेनद्रव्यंबोद्धव्यमित्याकारकाधुनिकसंकेतज्ञानाद्गुणवत्त्वप्रकारकशाब्दबोधोनभवत्येव। नचैवमनुभवापलापस्तादृशानुभवस्यैवासिद्धत्वादनुभवेवातादृशाधुनिकसंकेतज्ञानस्यस्वातन्त्र्येणगुणप्रकारकबोधजनकत्वमङ्गीकार्यम्। नचतादृशाधुनिकसंकेतज्ञानस्यस्वातन्त्र्येणहेतुतायां गौरवमितिवाच्यम्। गुणवान्द्रव्यपदजन्यबोधविषयतावान्भवत्वित्याकारकस्यबोधविषयत्वांशेगुणावच्छिन्नत्वानवगाह्याधुनिकसंकेतज्ञानस्यभवतापिस्वातन्त्र्येणहेतुत्वस्य स्वीकार्यत्वात्। दीधितिकृन्मतेगुणविशिष्टेश-

प्रवृत्तिनिमित्तलक्षणेवाच्यत्वेसतीतिविशेषणोपादान-
मितिचेन्न । शब्दाश्रयत्वस्याकाशपदवाच्यत्वमनङ्गीक-
र्तृभिःप्राचीनैराकाशपदादाकाशांशेतदुपस्थाप्याप्र-
कारकशाब्दबुद्धेरेवोपगमात् । तदुक्तम् । अस्तुवाप-
दादपिनिर्विकल्पकमिति । निर्विकल्पकत्वंचतदं-
शेतत्पदोपस्थाप्याप्रकारकत्वंनतुतदंशेसामान्यतोनिष्-
प्रकारकत्वं विभक्त्युपस्थाप्यैकत्वादीनांतदंशेप्रकार-
तायाआवश्यकत्वात् । तेनसमंपदार्थान्तरस्यसंसर्गान-
वगाहनेतादृशबोधस्यशाब्दत्वासंभवाच्च । वस्तुतस्तत्र-
निर्विकल्पकपदंतत्पदोपस्थाप्यार्थाविशेषितधर्मिविषयक-
शाब्दानुभवजनकनिर्विकल्प कस्मरणपरमतएवतत्रनिर्वि-
कल्पकरूपस्य स्मरणस्यानुपपत्तिःअनुभवस्यस्वसनामप्रका-

---

त्तिभ्रमतादृशसंकेतज्ञानयोर्हि तुल्यसम्भवात् । भवतातादृशा-
धुनिकसंकेतज्ञानाच्छाब्दबोधानङ्गीकारेदिधीतिकृतापिभवन्-
मतसिद्धतादृशाधुनीकसंकेतज्ञानाच्छाब्दबोधोनङ्गीकरणीयः ।
शाब्दत्वासम्भवादिति । आकाङ्क्षादिमत्पदप्रयोज्यपदार्थविषता-
निरूपितपदार्थविषयताशालिज्ञानस्यैवशाब्दत्वादितिभावः ।
स्वसमानप्रकारकत्वमात्रस्मृतिजनकत्वादिति । स्वसमानप्रकारक-
त्वञ्चस्वीयविषयताव्यापकप्रतिबन्धकतावत्त्वम् । व्यापकत्वञ्च स्वाव-
च्छेदकविषयतावत्त्वसम्बन्धेन । तादृशप्रतिबन्धकताचवह्नित्वोवच्-
छिन्नत द्वह्निनिष्ठप्रकारतानिरूपितपर्वतत्वावच्छिन्नतत्पर्वतनि-
ष्ठविषयताशालीच्छानिरूपितवह्नित्वावच्छिन्नतद्वह्निनिष्ठप्रका-
रतानिरूपितपर्वतत्वाच्छिन्नपर्वतनिष्ठविशेष्यताशालिज्ञान---
त्वावच्छिन्नतादृशज्ञाननिष्ठा, नचपर्वतोवह्निमानितिज्ञाननिष्ठा-

यापर्वतोवन्हिमान्निज्ञाननिरूपिताप्रतिबन्धकतातस्याअपिस्वीय-
विषयताव्यापकतयातादृशप्रतिबन्धकताभाववत्त्वस्यवक्तित्वा---
दिनाव च्छिन्नान्तरावगाहिपर्वतोवन्हिमान्वन्हिवत्पर्वतवान्देश--
इति ज्ञानेपिसत्त्वात्तादृशज्ञानानामपिपर्वतोवन्हिमान् इत्या-
कारकज्ञानसमानाकारकत्त्वापत्तिरितिवाच्यम्। स्वीयविषयता-
व्याप्यत्त्वस्यापिप्रतिबन्धकतायांनिवेशनीयत्वात्व्याप्यत्त्वमपि--
स्वा वच्छेदकविषयतासंबन्धेनग्राह्यम्। नचव्याप्यत्वमेवनिवे-
शनीयंकिंव्यापकत्वनिवेशेनेतिवाच्यम्। वक्तिव त्वे तद्वन्हिविष-
यकज्ञान निष्ठायावन्हित्वेनतद्वन्हिविषयकज्ञानंजायतामिती-
च्छानिरूपिताप्रतिबन्धकतातस्याअपिवन्हित्वेनतद्वह्न्यवगाहिप-
र्वतोवन्हिमानितिज्ञानीयविषयताव्याप्यत्वेनवन्हिरितिज्ञान-
स्यापिपर्वतोवन्हिमान्इतिज्ञानसमानाकारकत्वापत्तेः। न-
चवन्हिः पर्वतस्थेतिसमूहालम्बनज्ञानसमानाकारकत्त्वं प-
र्वतोवन्हिमान्इतिज्ञानेस्यात्तादृशसमूहालम्बनज्ञानीयविषय-
ता समनियतप्रतिबन्धकतासत्त्वादितिच्यम्। स्वीयविषयतासम-
नियतस्वनिष्ठप्रतिबन्धंकतावत्त्वस्यवि वक्षितत्वात् पर्वतवन्हि-
मन्निष्ठायातादृशेच्छानिरूपितप्रतिबन्धकतातस्याः समूहाल-
म्बनज्ञानीयविषयतासमनियतत्वेपितादृशसमूहालम्बनज्ञाननि-
ष्ठत्वाभावात्। नचपर्वतोवन्हिमान्इतिज्ञानस्यतादृशज्ञानप्रका-
रीभूतवन्हिविषयकवन्हिरितिज्ञानस्यसामानाकारकत्वापत्ति-
रितितादृशज्ञानस्य वह्निरितिज्ञानीय विषयतासमनियततया-
वन्हित्वेनतद्वन्हिविषयकज्ञानंजायतामितीच्छानिरूपितप्रति-
बन्धकतावत्त्वादितिवाच्यम्। स्वीयविषयतासमनीयतस्वनिष्ठ-
प्रतिबन्धकतावत्त्वंसमानाकारकत्वं,प्रतिबन्धकतावत्त्वंचस्वाश्रय-

नकत्वादित्याशङ्क्यप्रकारान्तरेण तादृशस्मरणमुपपा-
दितं मिश्रैः । अत्र च मतेजात्यतिरिक्तस्य तस्य स्वरू-
पतःपदार्थान्तरेप्रकारकत्वासम्भवादाकाशवासीत्या-

प्रतिबन्धकतावत्त्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकभेदस्वरू-
पोभयसम्बन्धेन । प्रतिबन्धकतायां स्वाश्रयत्व [illegible]ाभाववद्वृत्ति-
त्वस्वव्यापकत्वोभयसम्बन्धेन तथा च वह्निरितिज्ञानीयविषयतास-
मनियतावह्निरितिज्ञाननिष्ठायानिरुक्तप्रतिबन्धकतातद्वत्त्वस्य स्व-
रूपसम्बन्धे न पर्वतोवह्निमान् इतिज्ञानेसत्त्वेपि उभयसम्बन्धेनत-
त्सम्बन्धघटकप्रथमाभावेनतद्वत्त्वविरहात् तथाहि स्वाभाववद्-
वृत्तित्वस्वव्यापकत्वोभयसम्बन्धेन प्रतिबन्धकताश्रयीभूतायापर्-
वतोवह्निमानितिज्ञाननिष्ठावह्नित्वावच्छिन्नतद्वह्निप्रकारतानि-
रूपितपर्वतत्वावच्छिन्नतत्पर्वतनिष्ठविशेष्यताशालिज्ञानंजाय-
तामितीच्छानिरूपितप्रतिबन्धकतातद्वत्त्वसंबन्धावच्छिन्नस्वनिष्ठा-
वच्छेदकताकभेदवत्त्वविरहात् । पर्वतोवह्निमानितिज्ञानीय-
विषयतासमनियतायातादृशेच्छानिरूपितप्रतिबन्धकतानिरुक्त-
संबन्धेनस्वाश्रयप्रतिबन्धकतावत्त्वसंबन्धावच्छिन्नस्वनिष्ठावच्छे-
दकताकभेदवत्त्वसंबन्धेनतद्वत्त्वस्यवह्निरितिज्ञानेपिसत्त्वात् व-
ह्निरितिज्ञानस्यापिपर्वतोवह्निमानितिज्ञानसमानाकारकत्वा-
पत्तिरतःस्वरूपनिवेशनमितिसदेकपरिचिन्तितपद्धतिः । अन्य-
त्सुधीभिःशोधनीयम् । प्रकारान्तरेणेति । तद्धर्मनिष्ठप्रकारत्वा-
न्यप्रकारत्वानिरूपितद्विषयताशालिस्मृतिंप्रतितद्धर्मप्रकारेणतद्ध-
र्मानुभवःकारणमितिकार्यकारणभावकल्पनेन । न चैतादृशकार्य-
कारणभावकल्पनेपि क्वचित्तद्धर्मप्रकारेणक्वचित्तद्धर्माप्रकारेणस्मृ-
तिरित्यत्रविनिगमकाभावइतिवाच्यम् । तत्रोद्बोधकविशेषस्यै

दौशाब्दबोधानुपपत्तिः । अन्वयितावच्छेदकावच्-
छिन्नएवचपदार्थान्तरान्वयइतिनियमानुपपत्तिश्चेति
पदार्थवत्तत्प्रकारीभूतधर्मांशेशक्तिग्रहापेक्षायांगोत्वा-
देर्गवादिपदवाच्यत्ववच्छब्दाश्रयत्वस्याप्याकाशपद-
वाच्यत्वमावश्यकमित्यभिप्रेत्यैवदीधितिकृतागुणटि-
प्पण्यांरूपग्रन्थेऽन्ते दन्तत्त्वमित्यादिना गोत्वादिनाश-
ब्दाश्रयत्वस्याविशेषंव्युत्पाद्यप्रकाशस्यप्रवृत्तिनिमित्त-
लक्षणेवाच्यत्वविशेषणोपादानंदूषितमेव । प्रत्यक्षम-
णिदीधितौचपदार्थांशेगोत्वादेः प्रकारतायांशक्यताव--
च्छेदकतायाःप्रयोजकत्वमुपगम्यशक्यतावच्छेदकेश-
क्तिर्दूषितैव । अतोक्तानुपपत्तिश्चिन्त्या । यत्तु शक्त्याकाश-
पदादष्टद्रव्यातिरिक्तद्रव्यत्वादिनाप्याकाशबोधोभवतिनतु-
नियमतः शब्दाश्रयत्वेनैव तथासत्याकाशःशब्दाश्रयइति-
प्रयोगस्यमुख्यतानुपपत्तिः प्रत्येकंनानाधर्मविशिष्टएवाका-
शेतत्पदस्यनानाशक्तिकल्पनं नसंभवतिनानाधर्मावच्छिन्नै-
कधर्मिण्येकपदवाच्यतायाःक्वाप्यदृष्टत्वादितिशब्दाश्र-
यत्वोपलक्षितएवाकाशपदशक्तिरित्येवोपगतव्यम् । उपल-

---

वनियामकत्वात् आकाशवासीत्यादौ चाकाशपदस्यशब्दाश्रयत्व-
विशिष्टे लक्षणोपगमेनैवतादृशस्थलेशाब्दबोधानुपपत्त्यभावा-
दाह । अन्वयितावच्छेदकावच्छिन्नएवेति । अतोक्तानुपपत्तिरि-
ति ॥ गुणवत्त्वेनद्रव्यंबोद्धव्यमित्याकारकाधुनिकसंकेतग्रहा-
त्द्रव्यत्वरूपेणशाब्दबोधापत्तिर्गुणरूपेणतदनुपपत्तिरूपा । अत्रा
प्युक्तदीधितिकृतभाववर्णनमनुमतव्यम् । शब्दाश्रयत्वोपलक्षितेचा-
काशपस्यशक्तिरिति । शब्दाश्रयत्वस्याकाशपदशक्तावुपलक्षणत्वं

लक्षणस्यापि विशिष्टावाचकपदजन्यशाब्दप्रकारत्वेन किंचिद्वाधकम् । न च शब्दाश्रयत्वस्योपलक्षणत्वे तस्य वाविशेषात्प्रमेयात्वादेरप्याकाशपदजन्यानुभवप्रकारतापत्तिरिति वाच्यम् । तत्प्रकारकशाब्दबोधे तदंशेऽनतिप्रसक्तत्वरूपशक्यतावच्छेदकत्वावगाहित्वेनोपलक्षितशक्तिज्ञानस्य हेतुत्वादिति, तन्न ॥ आकाशः शब्दाश्रय इति प्रयोगस्यमुख्यत्वासिध्याऽष्टद्रव्यातिरिक्तद्रव्यत्वाकाशपदवाच्यत्वाद्येकतररूपेण लक्षणायाएव तत्रोपगमादिति ॥ यद्वाकाशःशब्दाश्रय इति वाक्यस्थमाकाशपदंमुख्यमेव निर्धर्मितावच्छेदककस्यान्वयबोधो न कुत्रापि तदाकाशपदाच्छक्त्याऽष्टद्रव्यातिरिक्तद्रव्यत्वादिनाबोधनिर्वाहाय विशिष्टावाचकाकाशादिपदस्य प्रकारांशे वाच्यत्वा-

शब्दाश्रयमाकाशपदजन्यबोधविषयतावानू भवतु इत्याकारकभगवदिच्छायां शाब्दबोधविषयतायामवच्छिन्नत्वसंबन्धेनानन्वयित्वात् । तथा चाष्टद्रव्यातिरिक्तद्रव्यत्वप्रकारकज्ञानस्यापि संकेतविषत्वात्माकाशपदात्ताद्रूप्येणापि शाब्दबोधनिर्वाहः । उपलक्षितशक्तिज्ञानस्य हेतुत्वादिति । शब्दाश्रयमाकाशपदजन्यबोधविषयत्वप्रकारतानिरूपितविशेष्यतावान् इत्याकारकशक्तिज्ञाने विशेष्यतांशे व्यापकत्वसंबन्धेन धर्मितावच्छेदकस्य शब्दाश्रयत्वादेः प्रकारताशालिशक्तिज्ञानमेव हेतुः न तु शब्दाश्रयत्वे ताहशविशेष्यतानतिरिक्तवृत्तित्वावगाहिशक्तिज्ञानं तथा सति चाष्टद्रव्यातिरिक्तद्रव्यत्वस्य द्रव्यत्वानतिरिक्ततया तच्च ताहशशक्यतानतिरिक्तवृत्तिताविरहात् असंगतिः स्यादिति

नवगाहिशक्तिग्रहस्यैवतद्धर्मावच्छिन्नविशेष्यकस्यतत्प्र-
कारकान्वयबोधेहेतुत्वमगत्याङ्गीकार्यंविशिष्टवाचक-
गवादिपदस्यप्रकारांशेवाच्यत्वावगाहिशक्तिज्ञानमे-
वतत्प्रकारकान्वयबोधहेतुरितिनशक्तिभ्रमस्यचगा-
ग्रहावन्तरेणगवादिपदाङ्गोपदवाच्यत्वाद्यवाच्यधर्म-
प्रकारकोबोधः ॥ आकाशादिपदमिवगवादिपदमि-
पिविशिष्टावाचकमिति भ्रमवतोगवादिपदादवाच्य-
धर्मप्रकारकबोधनिर्वाहायतत्तद्धर्मप्रकारकशाब्दबोधे
तद्धर्मसामानाधिकरण्यमात्रावगाहितत्प दवाच्य--
ताग्रहस्यहेतुत्वेपितद्धेतुतायांवाच्यतांशेविशेषणान--
न्तर्भावित्वावगाहित्वमप्यवच्छेदकमुपेयमतोऽवाच्य-
धर्मप्रकारकबोधहेतुगवादिपदशक्तिग्रहस्यभ्रम त्वनि -
यमः । अतोनाभ्रान्तस्यततस्तादृशबोधइतिध्येयम् ॥
एवंमुवर्णांहलवहनयोग्यगवादिरूपविशेषपरसामा
न्यवाचकपदघटितंद्रव्यं नास्तिगौर्नास्तीतिवाक्यंप्रयु-

---

ध्येयम् । अथैतन्मतेआकाशपदादाकाशनिष्ठतद्व्यक्तित्वे नशाब्द-
बोधापत्तिः तत्रापितत्पदशक्यतानतिरिक्तवृत्तित्वस्यसत्त्वात्
यदिचाकाशनिष्ठतद्व्यक्तिरवंशब्दाश्रयत्वमेवतद्रूपेणाकाशपदा-
च्छाब्दबोधोभवत्येवेत्युच्यतेतदाशब्दध्वंसवत्त्वेनाकाशपदाच्छा-
ब्दबोधापत्तिरितिचेन्न । एतन्मतेतद्रूपेणापिशाबोधस्येष्ट-
त्वादिति । तत्तद्धर्मावच्छिन्नविशेष्यकस्यप्राक्तनशक्तिग्रहस्येत्य-
नेनान्वयः । वाच्यत्वांशेविशेषान्तर्भावितावगाहित्वमिति ।
वाच्यत्वांशेगवादिपदजन्यशाब्दबोधविषत्व प्रकारतानिरूपित-
विशेष्यता रूपगवादिपदवाच्यत्वघटकप्रकारतांशेविशेषणान्त-

ज्यतेतच्च विशेषधर्मावच्छिन्ने लक्षणैव विशेषधर्मस्य सा-
मान्यपदावाच्यतया शक्त्या तद्रूपप्रकारकबोधानिर्वाहा-
त् । एवं यत्दुःखासंभिन्नसुखत्व धानकर्मगोत्वादिशिष्ट
वाचकस्वर्गधेन्वादिपदं केवलसुखत्वगोत्वाद्यवच्छिन्नतात्प
र्यात्प्रयुज्यतेतच्च लक्षणैव । शक्त्याप्रवृत्तिनिमित्तैकदे-
शं परित्यज्य न बोधदूत्यनुभवनिर्वाहाय शुद्धतद्धर्मप्रकार
कबोधेतदन्यरूपावच्छिन्नत्वानवच्छिन्नबोधविशेषवि--
षय त्वीयप्रकारतात्वेन प्रकारता घटितसंबन्धावगाहि
शक्तिज्ञानस्यकारण त्वमुपगन्तव्यं, शक्यतावच्छेद--
केशक्यत्वानभ्युपगन्तृमतेतादृशबोधेतद्रूपांशेसंकेत--
विशेष्यतावच्छेदकतापर्याप्त्यवगाहिज्ञानत्वेन हेतुत्वा

भावित्वा वगाहित्वं विशेषणमवच्छिन्नत्वावच्छिन्नत्वरूपं तदन्य-
त्वरूपं तदनन्तर्भावित्वावगाहित्वं तदभावावगाहित्वमित्यर्थः ।
तथाचगवादिवाच्यधर्मप्रकारकशाब्दबोधेतादृशधर्मावच्छिन्न--
विशेष्यत्वावच्छिन्नत्वावच्छिन्नत्वाभावात् गवादिपदजन्यशाब्द
बोधविषयप्रकारतानिरूपिततादृशवाच्यत्वधर्मव्यापकविशेष्य-
ताप्रकारकशक्तिज्ञानं हेतुः पर्यवसितम् । एवं चगौर्गौपदजन्यबो-
धविषयतावान्भवत्वित्याकारकभगवदिच्छायां शाब्दबोधविषय-
तायां गोत्वावच्छिन्नत्वस्य भानात् तन्निष्ठप्रकारकतायामवच्छि-
न्न त्वावच्छिन्नत्वस्य सत्त्वात् तदभावावगाहित्वे तच्च भ्रमएवेति-
अभ्रान्तानां गवादिपदवाच्यधर्मप्रकारकबोधः । शब्दाश्रयः
आकाशपदजन्यशाब्दबोधविषयतावान् भवत्वित्याकारकभ-
गवदिच्छायां शाब्दबोधविषयत्वांशे किंचिदवच्छिन्नत्वाभावा-
त् तत्रतादृशज्ञानं प्रमारूपमेवेति । एवंचगोत्वादि-
प्रकारकशाब्दबोधेउपलक्षित शक्तिज्ञानविशिष्टशक्तिज्ञान-

न्नातिप्रसंगइतितूक्तानुपपत्याहेयम् ॥ प्रामाकरास्तु धेनु-
पदस्यधानकर्मता विशिष्टएवशक्तिर्नतुगोत्वविशिष्टे, गोत्व-
स्यशक्तनुपाधित्वे नशक्तिनियन्तृकत्वाद्धानकर्मत्वस्यमहि-
ष्यादिसाधारणत्वेपिधेनुपदान्नतद्बोधः ॥ नचधेनुपदाद्गो-
त्वप्रकारकबोधस्यानुभविकतयाधानकर्ममहिष्यादिमति
देशेधेनुर्नास्तीतिविशेषदर्शिनांप्रयोगस्यमुख्यतयाचधे
नुपदजन्यबोधेगोत्वभानमवश्यमङ्गीकरणीयम् ॥ तथा
चधानकर्मत्वइवगोत्वेपिशक्तेरावश्यकता अशक्य-
स्यापिप्रकारतयाशाब्दबोधेभानोपगमेद्रव्यत्वप्रमेय---
त्वादेरपिप्रकारतयाशाब्दबोधेभानापत्तेरितिवाच्य-

योःपृथगेवहेतुत्वं परस्परव्यभिचारस्त्वविचिन्त्यवारणीयः सुधी-
भिः । उक्तानुपपत्त्या । गुणवत्त्वे नद्रव्यं बोद्धव्यमित्यादिनाउक्ता-
नुपपत्तेरित्यर्थः ॥ अत्रापिदीधितिकृताभिप्रायवर्णनमनुसर्तव्य-
म् । धानकर्मतावत्सकर्तृकदुग्धपानकर्मताविशेषणमिति । श-
क्यत्वेसतिशक्यतावच्छेदकंविशेषणमशक्यं सत् शक्यतावच्छेद-
कंशक्त्युपाधिःगोत्वस्यतत्त्वे नशक्तिनियामकत्वात् शक्तिनिष्ठवि-
शेषणतातिरिक्तगवितराष्ट्रत्तित्वप्रयोजकत्वात् विशेषणभिन्नवृ---
त्तित्वविशिष्टशक्तिव्यापकत्वादितियावत् । धानकर्मताविशिष्ट
गविलक्षणयापिविशेष्यदर्शिनामपिप्रयोगसंभवादाह । मुख्यत
याचेति । अनतिरिक्तवृत्तित्वनियतत्वादिति । अथगोत्वस्येवधा-
नकर्मत्वस्यापिशक्यतावच्छेदकतयाशक्यतावच्छेदकतापर्य्या-
प्त्य धिकरणयोः धानकर्मत्वगोत्वयोः महानसीयवह्न्यभावप्र
तियोगितावच्छेदकतापर्य्याप्त्यधिकरणमहानसीयत्ववह्नित्व-
योरिवातिरिक्तवृत्तित्वसम्भवात् कथमवच्छेदकतायामनति-

म् । अशक्यस्यभानेशक्यतावच्छेदकत्वस्यनियामकत्वात् ॥ गोत्वस्यचाशक्यत्वेशक्यतायामवच्छेदकतात्मकसंबन्धविशेषोपगमात् ॥ नचगोत्वस्यवृषभादिसाधारणस्यातिप्रसक्ततयाशक्तौनावच्छेदकतासंभवइतिवाच्यम् । अवच्छेदकत्वस्यप्रकृतेनतिप्रसक्तत्वानियतत्वान्नियतत्वेवाधानकर्मत्वसहितस्यैवतस्यावच्छेदकत्वोपगमात् ॥

अथगोत्वमेवशक्यं धानकर्मत्वमेवशक्तुप्रपाधिरितिवैपरीत्यमेवकुतोनस्यात् वस्तुतोधानकर्मत्वापेक्षयालाघवेनगोत्वस्यैवशक्यत्वमुचितम् नचगोत्वमतिप्रसक्तं धानकर्मत्वंचधानकर्मव्यक्तिभेदेनभिन्नं भिन्नमिति

रिक्तवृत्तित्वस्वीकारः कथंधानकर्मताविशिष्टगोत्वस्यावच्छेदकत्वोपगमइतिचेद्न । धानकर्मत्वविशेषणविधयाविलक्षणावच्छेदकत्वंगोत्वेउपाधितयाविलक्षणा वच्छेदकत्वशक्यतावच्छेदकत्वमित्युभयसाधारणस्यासत्त्वात् । तादृशतादृशावच्छेदकतापर्याप्त्यधिकरणंप्रत्येकमेवेतिगोत्वस्यशक्यतानतिरिक्तवृत्तितयातादृशावच्छेदकत्वासंभवाद्वच्छेदकतायाअनतिप्रसक्तत्ववृत्तित्वनियतत्वस्वीकारात् धानकर्मत्वसहितगोत्वस्यावच्छेदकत्वस्वीकाराच्च । शक्यत्वेसतिशक्यवृत्तित्वंविशेषणत्वम् । नत्वच्छेदकत्वम्घटितमितिधानकर्मत्वेअवच्छेदकत्वस्यैवाभावात्तथास्वीकारइतिकेचित् । धानकर्मत्वसहितस्यैवतस्यगोत्वस्यावच्छेदकत्वोपगमात् । तथाचधानकर्मत्वगोत्वोभयमेवशक्यतावच्छेदकमितिभावइत्यपिपङ्क्तिव्याख्यांकुर्वन्त्यन्ये ॥ अथगोत्वमेवशक्यमिति । यद्यपिगोत्वविशिष्टमेवशक्यमित्येववक्तुमुचितं तथापिगोत्वविशिष्टस्यशक्यत्वेगोत्वस्यापिशक्यत्वमाव

गोनिष्ठं तद्दनतिप्रसक्तमितिनवैपरीत्यमितिवाच्यम्। तस्या
तिप्रसक्तत्वेपिशक्यत्वोपगमेयुक्तिविरहात् ॥ वृषभादिबो
धस्यशक्त्युपाधिधानकर्मत्वस्यापिप्रकारतयावारणा-
त्। नचगोत्वस्यैवशक्यत्वेजातिशक्तौव्यक्तिलाभसं-
भवेनान्यलभ्यतयागवादिपदवद्व्यक्तिशक्त्युच्छेद
प्रसङ्गः तथाचधानकर्मत्वस्यजातिनिष्ठशक्यताव्यधि
करणत्वेनशक्यतावच्छेदकत्वानुपपत्त्यावृषभादिबोधो
दुर्वारएवेतिवाच्यम् ॥ एतदनुरोधेनान्यलभ्यत्वेपिव्य
क्तौशक्तिस्वीकारादितिचेन्न ॥ यद्धर्मविशिष्टे शक्तिस्त-
द्धर्माश्रयस्ययावतएवशक्यत्वनियमे नगोत्वस्यशक्यत्वेच
वृषभादेरपितथात्वापत्तेः ॥ धानकर्मत्वविशिष्टाया
गोःशक्यत्वेचगोनिष्ठधानकर्मताव्यक्तीनामेव विशेष-
णतयातासांचमहिष्या द्यव्यावृत्ततयामहिष्यादेःशक्य-
तापत्तिविरहादितिवदन्ति ॥ तन्मतेयद्यपिशक्तिज्ञा-
नाधुनिकसंकेतज्ञानयोः कारणतावच्छेदकभेदेनगौ
रवंनबाधकं, भगवद्विद्वेषिणांमीमांसकानांशक्तेः सं
केतानात्मकतयातयोरेककारणतायाः कथमप्यसंभ--
वात् ॥ तथापिगोनिष्ठधानकर्मताव्यक्तीनामनतिप्र-

सक्तमिति । सामानाधिकरण्ये नगोत्वमेवेति । त-
थाचतादृशसंबन्धेन गोत्वविशिष्टधानकर्मत्वमेवगोनि-
ष्ठधानकर्मत्वव्यक्तीनामनुगमकमितिभावः। अशक्यंशक्या-
ननुगमकमितिमीमांसकसिद्धान्तानुसारेणोत्तरयति । अ-
शक्येनेति । शक्त्युच्छेदकप्रसंगादिति । तथाचतादृश-
नियमानुसारेणै वतेषांविशेषणेशक्तिस्वीकारः, अशक्येन-
अशक्यानुगमेचविशेषणेशक्तिविरहेपितेनरूपेणाशक्त्यनुपगमसं-

सत्तानुगमकरूपाभावाच्छक्यत्वप्रसङ्गः। नचसामाना
धिकरण्ये नगोत्वमेवधानकर्मता त्वसहितंधानकर्मता
विशेषाणामनुगमकमितिवाच्यम्। अशक्येनशक्या-
नुगमेसर्वत्रैवविशेषणेशक्त्यवच्छेदप्रसंगात्॥ अतिप्र-
सक्त्या नापिधानकर्मतात्वेनविशिष्टे धानकर्मताविशेषे
शक्तिग्रहोपगमेलाघवाद्गोत्वविशिष्टे एवगोविशेषे
शक्तिर्धानकर्मत्वमेवशक्त्युपाधिरित्येवसुचितम्। अन-
नुगतेनधानकर्मतात्वेनशक्तिग्रहोपगमेचापूर्वव्यक्ते--
रलाभप्रसंगइत्यनुपपत्तिश्चिन्तनीया॥ यथानानाधर्मवि
शिष्टैकधर्मिवाचकपदाच्छक्तिप्रमातोनैकंपरित्यज्या-
परधर्मःप्रतीयतेतथाचन्द्रत्वसूर्यत्वनानाधर्मविशिष्टना-
नाधर्मिवाचकपुष्पवन्तादिपादच्चन्द्रत्वादिकं परित्यज्य
नसूर्यत्वादिप्रकारकबोधः। अथहरिपदशक्तिज्ञानादिवार्कः
पुष्पवन्तपदवाच्यइत्याकारकशक्तिज्ञानात्केवलसूर्यत्वा-
दिप्रकारकबोधोदुर्वारएव। नचपुष्पवन्तादिपदशक्ति
ज्ञानेनसूर्यत्वादिप्रकारकशाब्दबोधजननेचन्द्रत्वादि--
प्रकारकशक्तिज्ञानादेरपिसहकारितोपगमान्नातिप्रसंगइ-
तिवाच्यम्। हर्यादिपदवन्नानार्थताग्रहदशायांभ्रान्तस्य
केवलसूर्यत्वादिप्रकारकग्रहस्याप्युत्पत्तेः। एवंतत्पदस्यना-
नार्थताप्रसंगोदुर्वारः। नचार्थद्वयतस्यएकस्याएवशक्तेरुप-
गमान्ननानार्थता, नानाशक्तिमतएवनानार्थत्वादि-
तिवाच्यम्। शक्यतावच्छेदकभेदेनशक्तिभेदस्यावश्यक-
त्वात्। अवच्छेदकभेदस्यावच्छेद्यभेदनियतत्वात्।

भवात् व्यर्थविशेषणेशक्तिस्वीकारइतिभावः॥ पुष्पवन्तश
क्तिंविचारयितुंभूमिकांरचयति। यथानानेति। केवलतद्धर्मे--

अन्यथाद्दर्यादिपदेष्वपिशक्तैक्यापत्तेः॥ अत्रशक्ताख्य पदार्थसंबन्धान्तरवादिनोमीमांसकानुयायिनः॥ यथाधानकमैत्वगोत्वादिरूपशक्यतावच्छेदकभेदेपि धेन्वादिपदानांनशक्तिभेदः। अवच्छेदकताख्यासज्य-वृत्तित्वात्तथावापिचन्द्रत्वसूर्यत्वयोर्व्यासज्यवृत्तिशक्यता-वच्छेदकतास्वीकारान्न शक्तिभेदः,नवाएकंपरित्यज्या-न्यप्रतीतिः, केवलसूर्यत्वादिप्रकारकबोधेकेवलतद्धर्मैश-क्यतावच्छेदकतापर्याप्त्यवगाहिज्ञानस्यहेतुत्वात्। चन्द्र-त्वसूर्यत्वोभयांशेशक्यतावच्छेदकतापर्याप्त्यवगाहिज्ञानस्य-चोभयप्रकारकबुद्धित्वंकार्यतावच्छेदकमतस्तादृशशक्तिज्ञा-नाच्चन्द्रत्वावच्छिन्नान्वयबोधोपयिकयोग्यताज्ञानादासत्त्वे

---

शक्यतावच्छेदकत्वपर्याप्त्य वगाहिज्ञानस्यहेतुत्वादित्यनन्तरं नाभान्तानांशक्तिप्रमातः पुष्पवन्तपदात्केवलसूर्यत्वादिप्रकार-कबोधइतिपूरणीयम्। अतोनपञ्चस्यर्थद्वयासङ्गतिरिति। उभ-यप्रकारकबुद्धित्वमिति। अत्रघटपदंचन्द्रत्वसूर्यत्वावच्छिन्नश-क्यताकमितिज्ञानजन्यचन्द्रत्वसूर्यत्वप्रकारकबोधेचन्द्रसूर्य्यप--दाधीनबोधेचव्यभिचारवारणायपुष्पवन्तपदधर्मिकतादृशशक्ति ज्ञानाव्यवहितोत्तरत्वनिवेशस्यावश्यकतयाचन्द्रत्वसूर्यत्वोभयप्रका रकत्वस्यप्रत्येकविषयकत्वस्यनिवेशनंनिष्प्रयोजनमितिचेन्न। ता दृशशक्तिज्ञानाव्यवहितोत्तरत्वमात्रस्यतादृशशक्तिज्ञ नकार्यताव-च्छेदकत्वेतादृशशक्तिज्ञान धर्मिकाप्रमाण्यग्रहदशायांतादृशश क्तिज्ञानाव्यवहितोत्तरत्वावच्छिन्नस्योत्पन्नतयाअप्रामाण्यग्रहा-

नसूर्यत्वावच्छिन्नान्वयबोधप्रसङ्गः। नानार्थपदाच्चप्रत्यये कथ-

---

भावविशिष्टतादृशज्ञानस्यव्यभिचारात्कार्यतावच्छेदके चन्द्र-
त्वसूर्यत्वादिरूपविषयविशेषनिवेशस्यावश्यकत्वात् । नचाप्र-
माण्यग्रहास्कन्दिततादृशशक्तिज्ञानोत्तरं चन्द्रसूर्यादिपदाधीनच-
न्द्रत्वसूर्यत्वादिप्रकारकबोधः तत्र तादृशविषयविशेषनिवेशेपिव्य-
भिचारः। अतस्तद्वारणायाप्रमाण्यग्रहाभावविशिष्टतादृशशक्ति
ज्ञानाव्य वहितोत्तरत्वस्याप्रमाण्यग्रहाभावविशिष्टतादृशशक्तिज्ञा
नकार्यतावच्छेदके निवेशनीयतया विषयविशेषनिवेशेपिनोक्तस्थ-
लेव्यभिचार इति वाच्यम्। अप्रमाण्यज्ञानात्तत्तच्छक्तित्वेनोत्तेज-
कत्वपक्षे तादृशस्थले तत्तदप्रमाण्यज्ञानानामुत्तेजककोटावप्रवेशा-
देव तत्र व्यभिचाराभावात्। एवञ्च तादृशशक्तिज्ञानाव्यवहितो
त्तरत्वमात्रस्य कार्यतावच्छेदकत्वे तादृशशक्तिज्ञानधर्मिकाप्रमा-
ण्यग्रहदशायां तादृशाप्रमाण्यज्ञानव्यक्तेरनुत्तेजकत्वे तदुत्तरं चन्द्र-
त्वसूर्यत्वप्रकारकशाब्दबोधापत्तेः। उत्तेजकत्वे तादृशशक्तिज्ञा
नाव्यवहितोत्तरत्वावच्छिन्नस्योत्पन्नतयाव्यभिचार इति तद्वार-
णाय तादृशाप्रामाण्यज्ञानाभावविशिष्टतादृशशक्तिज्ञानाव्य-
वहितोत्तरत्वावच्छिन्नं प्रति तादृशतादृशाप्रमाण्यग्रहाभावविशि
ष्टतादृशशक्तिज्ञानत्वेन कार्यकारणभावकल्पने कार्यतावच्छेद-
के तत्तदप्रमाण्यग्रहाभावनिवेशापेक्षया लाघवात्कार्यतावच्छेद-
के चन्द्रत्वसूर्यत्वप्रकारकशाब्दत्वनिवेशो युक्त इति दिक्॥ नसूर्यत्वा

मावच्छिन्नस्यापिप्रतीत्यातत्प्रत्यक्षमवच्छेदकत्वप-
र्याप्तिरवश्यमोपगन्तव्यतयाशक्यतावच्छेदकताभेदेनश-
क्तिभेदः ॥ अथावच्छेदकताग्राहकमानेनैकधर्मिनि-
ष्ठैकविशेष्यतानिरूपितविशेषणतापन्नैष्वेवनानाध-
र्मेष्ववच्छेदकतापर्याप्तिर्गृह्यते । अतोमहानसीये-

वच्छिन्नान्नान्वबोधप्रसङ्गइति । नचचन्द्रत्वसूर्यत्वोभयांशेशक्यताव
च्छेदकत्वपर्याप्त्यवगाहिज्ञानस्यसूर्यत्वादिप्रत्यक्षविषयत्वस्यकार्य
तावच्छेदकत्वेपिचन्द्रत्वावच्छिन्नान्वययोग्यताविरहेणताद्दशशक्ति
ज्ञानात् नसूर्यत्वावच्छिन्नान्वयबोधप्रसङ्गः, पारमार्थिकसामग्र्या-
एवकार्योत्पत्तिव्याप्यत्वात् पारमार्थिकसूर्यत्वावच्छिन्नान्वयबो-
धसामाग्रीचचन्द्रत्वसूर्यत्वोभयांशेशक्यतावच्छेदकतापर्याप्त्यव-
गाहिज्ञानघटितचन्द्रत्वसूर्यत्वावच्छिन्नान्वयबोधसामाग्रीकेव-
लसूर्यत्वेपुष्पवन्तादिपदशक्यतावच्छेदकत्वेपर्याप्त्यवगाहिभ्रमा
त्मकज्ञानघटितसामाग्र्यपि, तथाचताद्दशताद्दशपारमार्थिकयत्
किञ्चिच्छक्तिसामग्रीविरहात् नोक्तापत्तिसम्भवः ॥ नचप्रत्यक्षवि-
षयकत्वमन्तर्भाव्यकार्यकारणभावद्वयकल्पनामपेक्ष्यचन्द्रत्वसूर्य-
त्वोभयविषयत्वमन्तर्भाव्यएककारणकल्पनैवलघीयसी,एतन्मते
व्यासज्यावृत्तिकारणतावच्छेदकत्वानङ्गीकारान्नगुरुतरकार्य-
कारणभावद्वयशङ्कापीतिवाच्यम् । तथासतिउभयविषयकत्वस्य
कार्यतावच्छेदकत्वे उक्तायुक्त्याभिधानस्यैवोचितत्वे नसूर्यत्वावच्-
छिन्नान्वयबोधप्रसङ्गरूपयुक्त्यभिधानस्योन्मत्तप्रलपितत्वाप-

नास्तिवन्हिर्नास्तीत्याकारकमहानसीयत्ववन्हित्वादि-
विशिष्टपुरस्कारेणपृथक्पृथक्प्रतियोगिविषयकंज्ञा-
नंमहानसीयत्ववन्हित्वाद्विपर्याप्तप्रतियोगितावच्छेद-
कताकंविशिष्टाभावंनावगाहते, अपितुशुद्धवन्हित्वा-
वच्छिन्नाभावमेवेतिकथंदिवाकरनिशाकरशशं पुष्प-
वन्तपदमित्यादिशक्तिग्रहेचन्द्रत्वसूर्यत्वोभयस्मिन्नुभ -
क्यतावच्छेदकतापर्याप्तिभानम् । तत्रधर्मिणोश्चन्द्र-
सूर्ययोर्भेदेनतन्निष्ठविशेष्यतायाऐक्यासम्भवादिति
चेन्न । यतोयत्रावच्छेदकीभूतव्यासज्यवृत्तिधर्मान्तरध-
र्मितावच्छेदकतयाधर्मद्वयादेर्भानंतत्रभिन्नधर्मिविशे-
षणतापन्नेष्वपितावद्धर्मेष्वेकावच्छेद्यतानिरूपिताव-
च्छेदकत्वपर्याप्तिःप्रतीयते । कथमन्यथाघटपटौनस्त
इत्याकारकोभयत्वावच्छिन्नाभावप्रतीतौघटपटादिरूपप्र-
तियोगिविषयताभेदेपिअभावविषयतायाऐक्यात्स-

त्तिरितिवाच्यम् । पारमार्थिसामग्रीवविशेष्यसामग्रीसमवहि
तायासामान्यसामग्र्या अपिकार्योत्पत्तिव्याप्यत्वात्, अतएवम-
थुरानाथतर्कवागीशेनापिसामान्यलक्षणायांज्ञानलक्षणावि-
चारेविशेषसामग्रीसमवहितायाःसामान्यसामग्र्याःफलो-
पधायकत्वाद्यभिहितम्। तथाचचन्द्रत्वसूर्यत्वोभयांशेशक्यताव-
च्छेदकतापर्याप्त्यवगाहिज्ञानस्यप्रत्यक्षविषयकत्वस्यकार्यताव-
च्छेदकत्वेचन्द्रत्वाद्यन्वययोग्यताविरहेतादृशतादृशविशेषसामा-
ग्रीसमवहितायाःसूर्यत्वादिप्रकारकान्वयबोधजनकबाधनिश्चया-

मूहालम्बनविलक्षणायामुभयत्वादिधर्मितावच्छेदक-
तयाभासमानघटत्वपटत्वादिषु तादृशाभावप्रतियो-
गितावच्छेदकतापर्याप्तिभानम् । एवंच दिवाकरनि-
शाकरयोः शक्तमेतत्पदमित्याकारकशक्तिग्रहे विषय-
तायाऐक्यात्समूहालम्बनविलक्षणोभयत्वधर्मिताव-
च्छेदकतापन्नचन्द्रत्वसूर्यत्वयोः शक्यतावच्छेदकत्वप-
र्याप्तिभानमविरुद्धमितिनदोषः । नचैवमुभयाभाव-
प्रतियोगितायामुभयत्वस्येवप्रकृतेउभयत्वस्याप्यव-
च्छेदककोटिप्रवेशप्रसङ्गइतिवाच्यम् । अभावबुद्धौप्र-
तियोग्यंशेउपलक्षणस्याप्रकारत्वनियमादुभयत्वस्य
प्रतियोगितावच्छेदकत्वध्रौव्यात् । शक्तिग्रहेचशक्यां-
शेउपलक्षणस्योभयत्वस्यप्रकारत्वोपगमेनतस्यशक्यता-
नवच्छेदकत्वात् ॥ अस्तुवाप्रकृतेउभयत्वसहितमेवच-
न्द्रत्वसूर्यत्वोभयंशक्यतावच्छेदकंद्वावित्यत्रेवपुष्पव-
न्तावित्यत्रापिप्रकृतविभक्तिभ्यामुपस्थितस्यद्वित्वस्यस-
त्त्वादेवभानंविरुद्धयोरेकावच्छेदत्वपर्याप्तिरपिघटत्वप-
टत्वाद्योरुभयाभावप्रतियोगितावच्छेदकत्वपर्याप्ति-
वत्प्रकृतेनविरुध्यते । नचघटपटौनस्तइत्यत्रोभयत्व-
एवप्रतियोगितावच्छेदकत्वंभासतेनतुविरुद्धघटत्व-

---

भावादिघटितसामग्रीसत्त्वात् सूर्यत्वादिप्रकारकान्वयबोधप्रस-
ङ्गोदुर्वारएवेतिदिक् ।

पटत्वादाविति वाच्यम् । केवलोभयत्वेनाद्दशाभाव-प्रतियोगितावच्छेदकतायाअपर्याप्तेः । कथनमन्यथायत्किंचिदुभयवतितादशाभावप्रतीत्युपपत्तिः । नचसामानाधिकरण्यसम्बन्धे नघटत्वपटत्वरूपावच्छेदकतावच्छेदकधर्मेणव्यावृत्तस्योभयत्वविशिष्यस्यैवतत्वावच्छेदकत्वम्प्रतीयतइतिवाच्यम् । तेनतेनप्रकारेणतत्तत्वोभयत्वस्याभानात् । तत्तद्रूपाणांधर्मिविशेषणतयैवभानात् । अतिप्रसक्तधर्मपुरस्कारेणाभासमानेनावच्छेदकत्वपर्याप्तिभानानुपगमात् । तत्वोभयत्वविशिष्टेऽभावप्रतियोगितावच्छेदकतापर्याप्त्युपगमेऽप्युभयत्वविशिष्टएवशक्यतावच्छेदकतापर्याप्तिमभ्युपगम्य चन्द्रत्वसूर्यत्वयोरवच्छेदकताविशेषणतयैवशाब्दबोधोपपत्तेः ॥ नचशक्यतावच्छेदकतावच्छेदकमनवच्छेदकविशेषणतयैवभासतइतिचन्द्रत्वसूर्यत्वयोरन्यथात्वेचन्द्रसूर्यांशेप्रकारतयाशाब्दबोधेभानानुपपत्तिरितिवाच्यम् ॥ तयोरवच्छेदकत्वेपिशक्तिग्रहेऽवच्छेदकताश्रयचन्द्रसूर्यविशेषणतयैवभाना-

---

व्यावृत्तस्य । विशिष्टस्याअतिप्रसक्तधर्मपुरस्कारेण । उभयत्वेन । ननुघटपटोभयन्नास्तीतिप्रतीतौघटपटत्वोभयधर्मितावच्छेदकत्वोभयत्वभानेउभयत्वेपिसामानाधिकरण्यसम्बन्धेनघटत्वपटत्वयोर्भाननैयत्यात् तद्रूपेणोभयत्वविशिष्टेऽवच्छेदकत्वभानसम्भवदाह । उभयत्वविशिष्टइति । शक्तिग्रहे । चन्द्रसूर्योभयंपुष्पवन्तपदशक्यमितिग्रहे ।

त् शाब्दबोधेऽपितद्विशेषणतयैवभानसम्भवात् ॥

अथशक्तिग्रहेसाक्षाच्छक्यतानवच्छेदकस्यतदुभयस्यशक्य-
चन्द्रसूर्यांशेसाक्षात्प्रकारतयाभानंनसम्भतीतिचेत्घटपटौ-
नस्तइत्यादौघटत्वपटत्वयोःसाक्षात्प्रतियोगितावच्छेदक-
त्वमन्तरेणप्रतियोगिविशेषणतयाभानासम्भवस्तुल्यएव*
इत्याहुः ॥ ज्ञानशक्तिवादिनस्तुचन्द्रत्वसूर्यत्वोभयप्रकार-

भानसम्भवादिति । तथाचन्द्रत्वसूर्यत्वावच्छिन्नविशे-
ष्यतानिरूपितद्वित्वप्रकारकशाब्दबोधंप्रतिचन्द्रसूर्योभयत्वाव-
च्छिन्नविशेष्यकसामानाधिकरण्य सम्बन्धावच्छिन्नचन्द्रत्व-
सूर्यत्वावच्छिन्नोभयत्वविशिष्टावच्छेदकताकपुष्पवन्तपदशक्य
ताज्ञानत्वेनहेतुतोपगमेशाब्दबोधेताद्दशशक्तिज्ञानसम्भवादिति
भावः। भानासम्भवस्तुल्यएवेत्याहुः । तथाचसाक्षात्प्रतियोगि-
तानवच्छेदकस्यप्रतियोग्यंशेभानवत्साक्षाच्छक्यतावच्छेदकस्यश-
क्यांशेभानमविरुद्धमितिभावः। नचताद्दशकार्यकारणभाववलात्-
च्छाब्दबोधेशक्यतावच्छेदकचन्द्रत्वसूर्यत्वोभयप्रकारेणचन्द्रसूर्यौ-
भयोर्भानोपपादानेपिशक्यतावच्छेदकप्रकारतया शक्यतावच्छे-
दकंप्रकारतावच्छेदकतयाशाब्दबोधेभासतेइतिनियमभङ्गइति
वाच्यम्। सामानाधिकरण्यातिरिक्तसम्बन्धेनशक्यतावच्छेदकता
वच्छेदकस्थलेएवतथानियमादित्यभिप्रायः।

* अथद्वित्वान्तर्भावेणपुष्पवन्तपदशक्तौविभक्त्युपस्था-
पितद्वित्वान्वयप्रसङ्गइतिचेदेवमेविद्वावितिवद्दवि-
वचनस्यसाधुत्वार्थकत्वोपगमादित्यधिकं क्वचित् ।

ज्ञानशक्तिवादिनस्तु चन्द्रत्वसूर्यत्वोभय-
प्रकारकज्ञानमेव पुष्पवन्तपदशक्यं, पुष्पवन्तपदमु-
भयप्रकारकज्ञानशक्तमित्याकारकशक्तिग्रहस्य तादृ-
शज्ञानत्वमेव कार्यतावच्छेदकमिति तादृशव्युत्पत्ति-
मतो नैकैकबोधापत्तिरतादृशस्य च भवत्येव तादृशो-
बोधः । नचैवमपि पुष्पवन्तपदं चन्द्रत्वप्रकारकज्ञा-
ने शक्तमित्यादिबोधस्य प्रमात्वाच्छक्तिभ्रमं विना प्रत्येक-
बोधानुदय इति कथमुपपद्यत इति वाच्यम् । केवल-
चन्द्रत्वादिप्रकारकबोधे तत्प्रकारकबोधत्वांशे शक्तिनि-
रूपकतावच्छेदकत्वपर्याप्तिग्रहस्य हेतुत्वात् । प्रकृते-
तूभयप्रकारकबोधत्वांशे शक्तिनिरूपकतावच्छेदक-
त्वपर्याप्त्यभ्युपगमात् तादृशचन्द्रत्वप्रकारक-
ज्ञाने शक्तमित्यादिज्ञानस्य भ्रमत्वनियमादित्याहुः ॥
वस्तुतस्तु पुष्पवन्तपदाच्चन्द्रत्वावच्छिन्नविषयकसूर्यत्वा-
वच्छिन्नविषयकबोधो भवत्वित्याकारक एव तादृशपदं-
भगवत्सङ्केतः केवलचन्द्रत्वावच्छिन्नविषयकबोधस्तत-
त्पदजन्यत्वेन न विषय इति तादृशपदान्न तथाविधो बो-
धः । न च तादृशपदजन्यत्वेन केवलचन्द्रत्वावच्छिन्न-
विषयकबोधस्य सङ्केताविषयत्वेपि चन्द्रत्वावच्छिन्नवि-

शक्तिज्ञानशून्यस्य । तादृशो बोधः । चन्द्रसूर्यत्वोभयप्रकारकबो-
धः । इत्याकार इति । चन्द्रत्वावच्छिन्नचन्द्रनिष्ठविशेष्यताकसूर्य-
त्वावच्छिन्नसूर्यनिष्ठविशेष्यताकबोधो भवत्वित्याकारक एवेत्यर्थः ।

षयकत्वेन सङ्केतविषयकाग्रहस्य चन्द्रत्वादिप्रकारक-
बोधजनकस्य सूर्यत्वाद्यवच्छिन्नविषयकबोधविषयक-
त्वेन सङ्केताग्रहघटितसूर्यत्वाद्यवच्छिन्नबोधसामग्र्या-
मसत्यामपि सम्भवात् तद्बलेनाभ्रान्तस्य केवलचन्द्रत्वावच्-
छिन्नविषयकशाब्दबोधे दुर्वार एवेति वाच्यम् । तत्प-
दजन्यकेवलचन्द्रत्वादिप्रकारकबोधे तत्पदजन्यकेवल-
चन्द्रत्वावच्छिन्नविषयकबोधत्वपर्याप्तविषयतावच्छेद-
कताकत्वप्रकारकसङ्केतविषयकज्ञानस्य हेतुत्वात् ।
पुष्पवन्तपदजन्यत्वघटितभगवत्सङ्केतविषयतावच्छेद-
कशरीरे च सूर्यत्वावच्छिन्नविषयकचन्द्रत्वावच्छिन्नविषय
कत्वयोर्द्वयोरेकत्र निवेशात्तत्पदजन्यप्रत्येकधर्माव-
च्छिन्नविषयकबोधत्वे विषयतावच्छेदकत्वतापर्याप्तिवि-
रहात् तदंशे तत्पर्याप्त्यवगाहिग्रहो भ्रम एवेति न
शक्तिप्रमातः प्रत्येकधर्मप्रकारकबोधापत्तिः । तत्पदजन्य-
चन्द्रत्वावच्छिन्नविषयकसूर्यत्वावच्छिन्नविषयकबोधत्व-

मतश्चन्द्रसूर्ययोर्भगवतः शङ्केतेतद्विषयतारूपशक्तेर्नानुपपत्तिरि-
ति ध्येयम् । तादृशशक्तिज्ञानं चन्द्रसूर्योभयं चन्द्रत्वावच्छिन्नच-
न्द्रनिष्ठविशेष्यताकसूर्यत्वावच्छिन्नविषयताकबोधत्वपर्याप्त्य-
वच्छेदकताकास्वजन्यप्रकारता निरूपिताया विशेष्यतातन्नि-
रूपितविषयतानिरूपितवृत्तित्वविषतानिरूपिततन्निरूपितत्व-
सम्बन्धावच्छिन्नविषयतासम्बन्धेन पुष्पवन्तपदवदित्याकारकम-

पर्याप्तविषयतावच्छेदकताकत्वप्रकारकसंकेतपदस्यचो धर्मप्रकारकबुद्धित्वमेवकार्यतावच्छेदकमतोनतद्-घटितसामग्रीबलादेकधर्मावच्छिन्नान्वयबोधस्यकिं-चित्कारणविरहदशायामपरधर्मप्रकारकशाब्दबोधा-पत्तिः । उभयविषयकत्वावच्छिन्नायाबोधनिष्ठसंके-तविषयतायाऐक्याच्छक्त्यैक्यमितिनतत्पदस्यनाना-र्थतेतिसंकेतशक्तिपक्षेरमणीयःसमाधिः । एकयो-क्त्यापुष्पवन्तौदिवाकरनिशाकरावित्यमरकोशेउक्ति-पदंशक्तिपरम् । पुष्पवन्तपदंपुष्पवन्तपदप्रतिपाद्यप-रंतृतीयाविशेषणे । तथाचसूर्याचन्द्रमसौएकशक्त्या पुष्पवन्तपदप्रतिपाद्यावित्यर्थः । उद्देश्यतावच्छेदका वच्छेदेनविधेयान्वयेतात्पर्याचन्द्रत्वसूर्यत्वयोरेकश-क्त्यधीनप्रतिपत्तिविषयतावच्छेदकत्वलाभः । तस्मान्नना नार्थंदिवत्ताद्दशैकधर्ममात्रप्रकारकबोधः । नानार्थश-

तोनचन्द्रसूर्योभयत्वप्रकारकस्मरणविरोधइतिध्येयम् । बोध-निष्ठसङ्केतविषयतायाऐक्यादिति । बोधनिष्ठसङ्केतविषयता-निष्ठपुष्पवन्तपदजन्यत्वप्रकारतानिरूपितचन्द्रत्वसूर्यत्वावच्छि-न्नविषयताकबोधत्वपर्याप्त्यवच्छेदकताकविषयतारवस्यैक्या-दित्यर्थः । अतोबोधभेदेनसङ्केतविषयताया भेदेऽपिनानुपपत्तिः । नानार्थेशक्तिभेदेनविशेषादितिलभ्यतेइति । नचपुष्पवन्तपदस्य नानार्थत्वेऽपिएकत्वाश्रयशक्तिप्रयोज्यपुष्पवन्तपदजन्यप्रतीति-विषयतावच्छेदकत्वस्यचन्द्रत्वसूर्यत्वयोः सत्त्वात् नानार्थत्व-

क्तिभेदेन विशेषादिति लभ्यते । अथवा एकयोक्त्या ए-कोच्चारणेन सूर्याचन्द्रमसौ पुष्पवन्तपदप्रतिपाद्यावि-त्यर्थः । तथा च नानार्थस्थले यथा नानावृत्तिमन्तरेण न नाना-र्थबोधः तथा न प्रकृते । अखण्डशक्त्यैक्येन सकृदुच्चरिता-त्सकृदर्थप्रत्यय एवेत्यस्याविषयत्वादिति भावः । पुष्प-वन्तपदवत्सर्वनामपदानामपि शक्त्यैक्यान्न नानार्थता ॥ अथ सर्वनामपदेन विशिष्य घटत्वपटत्वादिनैव वक्तृबुद्धिस्था घटपटादयः प्रत्याय्यन्ते न तु बुद्धिस्थत्वेन, अत्र घटोऽस्ति त-मानयेत्यादिवाक्यजन्यघटकर्मकानयनादिबोधा-नन्तरं विशिष्यानयनं घटकर्मकं त्वयान्न वेति संशयानुत्पाद-स्य सर्वानुभवसिद्धतया दुरपह्नवत्वात् । तथा च वक्तृबुद्धि-स्थत्वं न सर्वनामपदशक्यतावच्छेदकम् अपि तु घट-

शङ्कानवकाश इति वाच्यम् । सूर्याचन्द्रमसौ प्रयोज्यतासम्बन्धे-नैकशक्तिमत् पुष्पवन्तपदजन्यायाः प्रतीतेः तद्विषयावित्यन्व-यबोधे शक्तिनिष्ठैकत्वस्यापि स्वानाश्रयशक्तिप्रयोज्यत्वस्वाश्रय-शक्तिप्रयोज्यत्वोभयसम्बन्धेन प्रतीतावन्वयतात्पर्यात् । वस्तुत-स्तु चन्द्रत्वसूर्यत्वोभयत्वावच्छिन्नस्वविषयकपुष्पवन्तपदजन्य-ज्ञानप्रयोजकशक्तिनिष्ठान्योन्याभावाप्रतियोगिप्रकृतैकप-दार्थेऽन्योन्याभावस्य प्रतियोग्यवृत्तिर्बोध्यः तेनोभयाभावमा-दायनाप्रसिद्धिः तथा च तत्र सूर्याचन्द्रमसौ तादृशान्योन्याभा-वाप्रतियोगिशक्तिप्रयोज्यपुष्पवन्तपदजन्यप्रतीतिविषया-वित्यन्वयबोधः । इत्थञ्च पुष्पवन्तपदजन्यनानाशक्तिसत्त्वे-तादृशोभयविषयताज्ञानप्रयोजकशक्तिनिष्ठाऽन्योन्याभावप्र-तियोगित्वं शक्तौ बाधितमेव स्यादतस्तादृशैकोपाच्छन्नोऽलाभः । उक्तपदस्य शक्तिपरत्वे लक्षणापत्तिरत आह । अथवेति । तथा-पि पूर्वोक्तरीत्याऽर्थः परिष्कार्य इति ।

त्वपटत्वादिकमेवेति तादृशनानाधर्मावच्छिन्नेषु पुष्पव-
त्त्वादिरूपैकशक्तिसम्भवः । एकैकधर्ममात्रप्र-
कारकतदन्वयबोधानुपपत्तिरिति सर्वनाम्नां नानार्थ-
त्वं दुर्वारमेव । न वा नानार्थतोपगमेनापि निर्वाहः ।
यद्रूपावच्छिन्नगोचरव्यवहारजनकत्वं येन पुंसा त-
दादिपदेन गृहीतं तदवच्छिन्ने तेन तच्छक्त्यग्रहेण प्रक्रान्त-
स्यापि तदवच्छिन्नस्य तत्पुरुषीयतदादिपदजन्यबोध-
विषयत्वानुपपत्तेः । न च बुद्धिस्थत्वं प्रकारीभूतघट-
त्वादीनामेवानुगमकं तथा च बुद्धिस्थप्रकारवांस्तत्पदशक्य
इत्याकारकशक्तिग्रहः स च तद्धर्मप्रकारेण सामान्यप्रत्या
सत्त्या सकलधर्मविषयक एवेति न पूर्वधर्मप्रकारेण बो-
धानुपपत्तिः । सामान्यप्रत्यासत्त्यनभ्युपगमे च शक्ति-
ग्रहविशेष्यतावच्छेदकप्रकाराश्रयस्यापूर्वधर्मिणः श-
क्तिग्रहाविषयत्वे पि शाब्दबोधे भानवच्छक्तिग्रहधर्मि-
तावच्छेदकतावच्छेदकानुगतरूपाश्रयस्यापूर्वधर्मस्य-
शक्तिग्रहं विना न शाब्दबुद्धौ भानानुपपत्तिः । शक्ति-
धियः समानविषयकत्वस्यातन्त्रत्वादिति वाच्यम् ।
बुद्धिस्थत्वस्य शक्यतावच्छेदकतानवच्छेदकत्वेन श-
क्यतावच्छेदकानुगमकत्वायोगात् । तदवच्छेदकत्वे
च तस्यापि शाब्दबुद्धौ शक्यतावच्छेदकघटत्वादिविशेष-
णतया नियमतो भानप्रसङ्गात् स्वरूपतो घटत्वादि-
प्रकारकशाब्दबोधानिर्वाहाच्च । उपलक्षणेनापि-

-शक्यतावच्छेदकानुगमेशक्यस्याप्युपलक्षणेनैवानुगमो-स्तु किंविशिष्टशक्त्या । अथद्रव्यादिपदाद्घटत्वा-दिप्रकारकबोधप्रसङ्गभङ्गाय विशिष्टशक्तिरभ्युपेयते । प्रकृतेबुद्धित्वस्योपलक्षणत्वेऽपि तेनानुगमेन किंचिद्-बाधकमिति चेद्वस्तुबुद्धित्वेनानुगतधर्मेणानुगता-नांप्रकाराणांशक्तिधीविषयतातथापि सर्वनाम्नांनाना-र्थत्वं दुर्वारमेव । साक्षात्परंपरयावच्छेदकत्वै-क्यादेवावच्छेदकैक्यं बुद्धित्वस्य तच्चातथात्वात् । उप-लक्षणैक्येनान्तरैक्ये हरिपदादिशक्यतावच्छेदका-नामप्युपलक्षणीभूतेनान्ततो बुद्धिविशेषविषयत्वादि-नाऽनुगमसम्भवेन नानार्थमात्रोच्छेदप्रसङ्गात् । एवं-बुद्धित्वप्रकारत्वांस्तत्पदशक्यइत्याकारकशक्तिज्ञाना-त्स्वरूपतोघटत्वादिप्रकारकस्मरणाद्बोधोनसम्भ-वतः । जातिमान्शक्तिपदकसम्बन्धोऽत्यादिज्ञानात्स्वरूप-तोहस्तित्वादिप्रकारकस्मरणानुदयात्स्वरूपतस्तद्धर्म-प्रकारकस्मरणेस्वरूपतस्तद्धर्मप्रकारेणायस्यसम्बन्धोगृहीत-स्तादृशसम्बन्धिज्ञानस्यहेतुत्वात् । यथायाभ्यांरूपाभ्यां-धर्मिणोः

---

तादृशसम्बन्धिज्ञानस्यहेतुत्वादिति । तदेवानुभवेनद्रढय-ति । यथेति । धर्मिणोः, सम्बन्ध प्रतियोग्यनुयोगिनोः ।

सम्बन्धोगृहीतस्तदेकतररूपप्रकारकसम्बन्धिज्ञाना-
दपरतद्रूपप्रकारेणैवसम्बन्ध्यन्तरस्मरणमित्यनुभव
स्तथा।यादृशरूपाभ्यांधर्मिणोःसम्बन्धोगृहीतस्तादृशैक-
धर्मप्रकारकसम्बन्धिज्ञानादेवतादृशापरधर्मप्रकारेणै-
वधर्मिस्मरणमित्यपि । तथाचकिंचिद्विशेषितप्रकार-
कंग्रहसम्बन्धिज्ञानन्तत्राविशेषिततद्धर्मप्रकारकस्म-

---

सम्बन्धोगृहीतइति । तथाचनिरवच्छिन्नयद्रूपावच्छिन्नवि-
शेष्यतानिरूपितयद्रूपावच्छिन्नप्रकारतानिरूपिताचयास-
म्बन्धविषयतातच्छालिग्रहः । तदेकतररूपप्रकारकसम्ब
न्धिज्ञानादिति । निरवच्छिन्नतदेकतरधर्मावच्छिन्नविषयता-
निरूपितसम्बन्धविषयतानिरूपितनिरवच्छिन्नतद्धर्मावच्छिन्न-
विशेष्यताशालिज्ञानात् । अपरतद्रूपप्रकारेण । निरवच्छिन्न-
तद्रूपप्रकारेणेत्यर्थः । यादृशाभ्यांरूपाभ्यांधर्मिणोःसम्बन्धोगृहीत-
इति । यद्रूपावच्छिन्नयन्निष्ठावच्छेदकतानिरूपितविशेष्यता-
निरूपितयद्र ।ावच्छिन्नतद्धर्मनिष्ठावच्छेदकताकप्रकारतानि-
रूपितसम्बन्धविषयताशालिग्रहइत्यर्थः । तादृशैकधर्मप्रकार-
कसम्बन्धिज्ञानात् । तद्धर्मावच्छिन्नतन्निष्ठावच्छेदकतानिरू-
पितप्रकारतानिरूपितसम्बन्धविषयतानिरूपिततद्धर्मावच्-
छिन्नतन्निष्ठावच्छेदकतानिरूपितविशेष्यताशालिज्ञानादित्य-
र्थः । तादृशापरधर्मप्रकारेण । तद्धर्मेण, तद्धर्मप्रकारेण * इदमुपलक्ष-
णम्धर्मितावच्छेदकतायां स्वावच्छिन्नत्वंसम्बन्धग्रहप्रकारता-
वच्छेदकांशेनिरवच्छिन्नत्वंनिवेश्यएको।नियमः अपरस्वधर्मि-

रणास्यानुभवविरुद्धतयेष्टापत्तेरयोगात् । अन्यथाकदाचित्स्वरूपतस्तत्प्रकारिकाकदाचिद्धर्मान्तरावच्छिन्नतत्प्रकारिकास्मृतिरित्यत्रनियामकाभावप्रसङ्गात् । सामान्यलक्षणप्रत्यासत्तिमनङ्गीकुर्वतांपुनरनिष्कृतिरेवप्रकृतिग्रहाविषयस्यापूर्वधर्मस्यस्वरूपत:कथमपिभानासम्भवात् । नहिबुद्धिविषयतावच्छेदकत्वेन धर्मान्तरविषयकंज्ञानंस्वरूपतोपरधर्मप्रकारेणबुद्धिञ्जनयितुम्प्रभवति । तथासतिसमानप्रकारतानियमस्यापिप्रभङ्गप्रसङ्गाद् इति । नैवम् । भगवत्सङ्केतरूपायांशक्तौशक्यतावच्छेदकघटत्वादावुपलक्षणीभूतबुद्धिविषयतावच्छेदकत्वप्रकारेणभासमानेतदादिपदजन्यबोधविषयतावच्छेदकत्वम्भासते । एवंचबुद्धिविषयतावच्छेदकधर्मावच्छिन्नस्तत्पदाद्बोध्यइत्याकारकस्यतत्पदस्यबुद्धविषयतावच्छेदकरूपावच्छिन्नंबोधयत्वित्याकारकस्यवासंकेतस्यविषयतायाअननुगतघटत्वपटत्वानिष्ठायाअप्यनुगतरूपावच्छिन्नतयाशक्त्यैक्यंघटादिपदसंकेतविषयतानांनानाघटव्यक्तिनिष्ठानांघटत्वाद्यनुगतधर्मावच्छिन्नत्वेनपश्वादिपदसंकेतविषयतानांप्रकारीभूतनानालोमादिव्यक्तिनिष्ठानांलोमत्वाद्यनुगतधर्मावच्छिन्नत्पदशक्त्यैक्यवत् । इयांस्तुविशेषः । तत्रघटत्वादिलोमत्वादिषुतत्पद-

तावच्छेदकातायांनिरवच्छिन्नत्वंसम्बन्धग्रहप्रकारतावच्छेदकतांशे अवच्छिन्नत्वंनिवेश्यचनियमःकार्यइति ।

जन्यबोधविषयतावच्छेदकत्वं भासत इति तानि विशे-
षणान्युच्यन्ते । प्रकृते च बुद्धिविषयतावच्छेदकत्वे सत्वं-
नाम जन्यबोधविषयतावच्छेदकत्वं संकेतेन नावगाह्यते-
ऽपि तु तादृशविषयतासामानाधिकरण्यमात्रमिति तदु-
पलक्षणमिति गीयते । अननुगमकहरित्वसिंहत्वादिनिष्ठा-
नां नानाहर्यादिपदसङ्केतविषयतानामनुगतकिञ्चिद्-
धर्मावच्छिन्नत्वाभावान्नशक्तैरैक्यं, तत्रोपलक्षणीभूतकि-
ञ्चिद्धर्मप्रकारेणाभासमानस्यैव हरित्वादेर्भगवत्सङ्केतस्व-
रूपायां शक्तौ हर्यादिपदजन्यबोधविषयावच्छेदकत्वभा-
सते इति न नानार्थोच्छेद इति । यद्यपि घटादिपदसं-
केतस्य घटत्वविशिष्टविषयकत्ववत्त्वं नाम संकेतेन बुद्धि-
विषयतावच्छेदकत्वे तत्पदजन्यबोधविषयतावच्छेद-
कत्वानवगाहनेऽपि संकेतस्य तद्विशिष्टविषयकत्वमक्षतमे-
ति संकेतविषये तद्विशेषणमेव   एवं शक्यविशेषणघट-
त्वादिनिष्ठबोधविषयतावच्छेदकत्वरूपबोधविषय-
तानिष्ठसंकेतीयविषयतानिरूपितविषयतारूपशक्य-
त्वेतदवच्छेदकत्वमपि । तथापि बोधविषयतया संके-
तविषयत्वरूपशक्यतायास्तत्राभावेन शक्यमतद्विशेष-
णम् । शक्यत्वे सति शक्यव्यावर्तकत्वस्यैव शक्यविशेषण
त्वादिति तस्य शक्योपलक्षणतयाऽऽख्यानं पदजन्यबोधविषया-
श्रयत्वभानानियमवत्तदादिपदजन्यबोधे तद्भानमित्यर्थः ।
एतद्बीजं तु तदुपलक्षित घटत्वादिविषयकत्वेन तद्वि-

प्रयकघटत्वादिबोधस्यापि संकेतविषयत्वम् । घटादि-पदसंकेतस्य घट त्वादिबोधांशे विशिष्टविषयकबोधएव-विषयइतितत्त्वन्यबोधेताहृशधर्मभाननियमः । य-थायद्विशिष्टविशेष्यकबोधविषयत्वं सङ्केतविषयस्तच्छे-ष्यतावच्छेदकतयाव्यवह्रियते तथायद्विशिष्टप्रकार-विशिष्टविषयकत्वंतथा तच्छेष्यतावच्छेदकतावच्छेद-कमित्युच्यते, प्रकृतेबुद्धिविषयतावच्छेदकत्वं नतथे-तिनतच्छेष्यतावच्छेदकंनवातत्त्वावच्छेदकमिति जा-तित्वादिविशिष्टघटत्वाद्यवच्छिन्नस्यतदादिपदाद्यधी-नबोधेतुबोधांशेबुद्धिविषयतावच्छेदकतावच्छेदक-त्वोपलक्षितधर्मविशिष्टावच्छिन्नविषयत्वावगाहिसं-केतःप्रयोजकइतितन्नजातित्वावच्छिन्नघटत्वादिनि-ष्ठप्रकारताकबोधएवविषयइतिनजातिमानित्याकार-कबोधकालेघटइत्याकारकोबोधः । यत्किंचित्प्रका-रेणभासमानेधर्मेऽवच्छेदकताभानेतद्विशिष्टएवभा-सतेनतुतदुपलक्षितइतिनियमः । कथमन्यथास्वरूपतो घटत्वावच्छिन्नाभावस्यनजातिमान्नास्तीत्याकारक-प्रतीतिः । एवंचबुद्धिविषयतावच्छेदकत्वोपलक्षि-तेकथंबोधविषयतावच्छेदकत्वं संकेतेनावगाहनी-मितिचेन्न । अवच्छेदकतायाअवच्छेद्याश्रयविशेषण-तापन्ने संसर्गविधयाभानेएवतथाविधनियमात् अ-न्यथाधूमव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिता-

त्वाभावत्वानित्याकारकव्यापकतावच्छेदकत्वोपलक्षितवन्हित्वावच्छिन्नाभावप्रतीत्यनुपपत्तेः । प्रज्ञातिचतत्पदं बुद्धिस्थप्रकारावच्छिन्नविषयताकबोधजनकत्वनित्याकारकोवच्छेद्यावच्छेदकाभावप्रकारकएवसंकेतोङ्गीकार्यइत्यनुपपत्तेरभावात् । स्वरूपतोघटत्वादिप्रकारकस्मरणाशाब्दबोधाद्युपयोगीशक्तिग्रहःस्वरूपतोघटत्वादिप्रकारकएव । यदास्वरूपतोयद्धर्मप्रकारकज्ञानसामग्री तदैवस्वरूपतस्तद्धर्मप्रकारेणशक्तिंगृहीत्वास्वरूपतस्तत्प्रकारेणधर्मिणंस्मरत्यनन्तरमनुभवतिच, मानसिचशक्तिग्रहेनव्यवहारदर्शनापेक्षापित्वसंसर्गाग्रहसहितोपस्थितेरेवेतियद्धर्मावच्छिन्ने तदादिपदघटितवाक्याद्व्यवहारेनदृष्टस्तदवच्छिन्नस्यापिमानसशक्तिग्रहाद्बोधः सुघटएव । नच१व्यवहारदर्शनाद्यविषयेमनसाशक्तिर्निश्चेतुंनशक्यतेविपरीतकोटेरप्युपस्थितिमात्रेणभानसंभवादितिवाच्यम्२ । उपस्थितस्यापिबाधितस्यदोषमन्तरेणाभानान्निश्चयस्याप्युपपत्तेः३ । वस्तुतस्तुकति-

पपितुमसंसर्गाग्रहइति । उपस्थितिरेवेति । असंसर्गाग्रहे बाधनिश्चयाभावः । उपस्थितमात्रेणभानसम्भवादिति । तथाचकोटिद्वयभासकसामग्रीसत्त्वात्संशयएवस्यान्ननिश्चयइतिभावः । व्यवहारदर्शनादेरुच्छेदापत्तेरितीति । तथाचव्यवहारदर्शनाविषयेप्रायशःशक्तिसंशयस्यानुभवसिद्धतयातत्रदोषत्वम्, अन्यापिदोषसम्भवादिति भावः ।

१ अथ २ नच ३ रितिवाच्यम् । एवंसतिशक्तिग्रहे व्यवहारदर्शनादेरुच्छेदापत्तेरितिचेन्न । इतिक्वचित्पाठस्तदनुसारेण टीका ।

पक्षविषये सर्वनामघटितवाक्यात् प्रयोज्यप्रवृत्तिमुपलभमानः प्रवर्तकस्यानविषये शक्तिज्ञत्वयमबुद्धि विषयतावच्छेदकधर्मावच्छिन्नस्तत्पदशक्य इत्यवसामान्यतोऽवधारयति । एवञ्चैतस्य बुद्धिविषयतावच्छेदकधर्मवानिति यदातैमत्युक्ते तदानीमस्यैवैतत्पदस्येव। व्योमवेति सन्देहो नावतरति, यादृशधर्मावच्छेदेन यद्वधारितं तादृशधर्मनिश्चयस्य स्वसमानधर्मितावच्छेदकतद्विरोधिकोटिभानविरोधित्वादिति सम्भवत्येवापूर्वेऽपि विषये सामान्यतः शक्तिनिश्चयः । यथैतस्यापि तत्पदं चैत्रत्वादिविशिष्टवाचकत्वसन्देहस्य दुरुच्छेदतया तत्पदात् व्यवहारदर्शनात् विषयचैत्रत्वाद्यवच्छिन्नविषयकशाब्दबोधो दुरुपपाद एव । तद्धर्मप्रकारकशाब्दे तद्धर्मविशिष्टवाचकतानिश्चयस्य हेतुत्वात् । अन्यथा गवादिपदाद्भान्तस्यापि शक्त्या सास्नादिमत्त्वप्रकारेणशाब्दा-

---

सामान्यतोऽवधारयतीति । बुद्धिविषयतावच्छेदकधर्मवान् तत्पदशक्य इत्यवधारणाकारः । तद्धर्मविशिष्टवाचकतानिश्चयस्य तद्धर्मावच्छिन्नत्वावच्छिन्नशाब्दबोधविषयत्वविषयताघटितसङ्केतविषयताशालिनिश्चयस्येत्यर्थः । तत्पदन्तद्धर्मविशिष्टशक्तमित्युदाहरणवाक्यतः सामान्यतो व्याप्तिरिति यत्किञ्चित्स्वरूपानुगतधर्मघटितव्याप्तिमवधारयतीति । यादृशधर्मावच्छिन्नविषयकत्वबुद्धिप्रयुक्तत्वसामानाधिकरण्याभावप्रतियोगितानवच्छेदकतादृशधर्मविशिष्टशक्तत्वमित्यवधारणाकारः ।

पत्ते रितिचेन्न । तत्पदप्रयोजकबुद्धिप्रकारतयागृहीत-
घटत्वादिविशिष्टव्यवहारदर्शनात् तत्पदस्य शक्ति-
ग्राहको यावत्तत्पदं यादृशयादृशधर्मावच्छिन्नविषयक-
बुद्ध्या प्रयुज्यते तत्तत्पदं तादृशधर्मविशिष्टशक्तमिति सा-
मान्यतो व्याप्तिमवधारयति तदनन्तरं च प्रत्यक्षेणागृही-
तचैत्रत्वादिविशिष्टविषयकबुद्धिप्रयोज्यत्वस्य प्रकारता-
दिना यत्र तत्पदे गृह्यते तत्र पक्षे तादृशहेतुना चैत्रत्वा-
दिविशिष्टवाचकत्वस्य प्रागसिद्धस्यापि पक्षधर्मताबला-
दनुमित्या तत्र निश्चयेनावगाहनसंभवान्न काप्यनुप-
पत्तिरिति ।*

---

अवगाहनसम्भवादिति । यत्तद्घटितसामान्यव्याप्तिस्थले प्रकृ-
तव्याप्तिविशिष्टं प्रकृतहेतुत्वमस्य पक्षेऽनपेक्षणादिति भावः ।

---

* न चैवमपि तद्धर्मप्रकारकबोधे पदजन्यबोधविषयत्वांशे वि-
शिष्य तद्धर्मावच्छिन्नावगाहितया संकेतनिश्चयोऽपेक्षितः । प्र-
मेयत्वादिना घटादिविषयकबोधविषयत्वांशे तदवच्छिन्नत्वाव-
गाहित्वेन संकेतनिश्चयेऽपि विशिष्य घटत्वाद्यवच्छिन्नत्वावगा-
हित्वसंशयसंभवात्तत्प्रकारकबोधानुदयादिति विशिष्य घट-
त्वाद्यवच्छिन्नावगाहित्वस्य सर्वनामसंकेतनिश्चयासंभवात्क-
थं तत्प्रकारकबोधस्ततो भविष्यतीति वाच्यम् । बुद्धिविषयताव-
च्छेदकनिखिलधर्मावच्छिन्नविषयत्वावगाहितया निश्चित-
त्वाच्चैत्रत्वादेर्बुद्धिविषयतावच्छेदकत्वग्रहस्यैव विशिष्य तद-
वच्छिन्नत्वावगाहितासंशयविरोधित्वात् । न च तादृशग्रहस्य

कैचित्तुबुद्धिविषयतावच्छेदकत्वेनानुगतधर्मेणासकल-
धर्मं विषयकत्वात्कत्यनुभवे प्रमुष्टबुद्धिविषयतावच्छेदकां-
शं स्वरूपतस्तेनत्वादिप्रकारकत्वशक्तिस्मरणं निराबाधमेवे-
तितन्मूलकमेवस्वरूपतोपूर्णचैत्रत्वादिप्रकारकांशाद्धू-
ज्ञानम्भविष्यतीतिकिमनुपपन्नम् । स्वरूपतस्तत्प्रकार-
कस्मरणे स्वरूपतस्तत्प्रकारकानुभवसंस्कारयोरनपेक्ष-
णादुद्बोधकवैचित्र्यादेवकदाचिज्जातिमानित्याकारकंकदा-
चिद्घटइत्याकारकंविलक्षणंस्मरणमितिनियमोपपत्तेः । स्व-
रूपतोघटत्वादिप्रकारकानुभवजनितसंस्कारवतोजाति-
त्वादिनाघटत्वादिप्रकारकात्संस्कारात्कदाचित्स्वरूपतो
घटत्वाद्यप्रकारकस्यजातिमानित्याकारकस्यस्मरणस्योदये-
नस्वरूपपतस्तत्प्रकारिकायांस्मृतौ तथाविधानुभसंस्का-
रयोर्विशिष्यहेतुत्वेपिउद्बोधकविशेषविरहस्यतादृश-
स्मृतिविरहप्रयोजकतायाआवश्यकत्वात्तादृशहेतुता-
याअप्रमाणिकत्वात् । कथमन्यथाविशेषणान्तरानव-
च्छिन्नात्मत्वाद्यदृष्टशरीरविशेषनिष्ठजातिविशेषावच्-

प्रमुष्टबुद्धिविषयतावच्छेदकाशमिति । प्रमुष्टं स्वविषयीभूतंबु-
द्धिविषयतावच्छेदकांशं यत्रेति तादृशस्मरणमित्यन्वयः ।

तथाविधसंशयविरोधित्वमप्रसिद्धमितिवाच्यम् । द्रव्यत्वेपृ-
थिवीवृत्तिनिखिलधर्मसामानाधिकरण्यनिश्चयेविशिष्यघट-
त्वेपृथ्वीवृत्तित्वनिर्णयस्यद्रव्यत्वेविशिष्यघटत्वसामानाधिक-
रण्यसंशयविरोधित्वस्यापिअनुभवसिद्धस्यदुरुपन्हवत्वात् । अ-
थैवमितिप्रभृतिनाकाप्यनुपपत्तिरित्यन्तस्यस्थानेपाठान्तरम् ।

च्छिन्नसंकेतितरामरावणादिपदेभ्यो वाक्यार्थधीरस्मा-
कम् । अर्थश्चानिर्विशेषणातीन्द्रियजातिविशेषावच्-
च्छिन्नवाचकमनःप्रभृतिपदेभ्योऽस्माकं शाब्दधीरेव । तत्र
जातित्वादिना शक्तिग्रहेण प्रमुष्टजातित्वांशं मनस्त्वा-
दिप्रकारेण शक्तिस्मरणमिति तत्रापि विशेषणांशे मोष-
मन्तरेण गत्यन्तराभावादिति वदन्ति । विवदन्ते च बह-
वो विद्वांसः । स्मृतेर्विलक्षणप्रकारतायां संस्कारानुभवयो-
स्तादृशप्रकारतायाः प्रयोजकत्वस्योद्बोधकविशेषप्रयो-
जकतामाश्रित्योच्छेदने विशेष्यविशेषणभावविशेषे-
ऽप्युद्बोधकविशेषस्यैव नियामकत्वसम्भवात् प्रकारत्व-
विशेष्यत्वानन्तर्भावेन सामान्यतस्तद्विषयकस्मृतौ तद्वि-
षयकत्वेनैव संस्कारानुभवयोर्हेतुतापत्तेः । रामरा-
वणादिपदेभ्यस्तल्लक्षणया तत्तदर्थत्वादिप्रकारक एवा-
न्वयबोधः । वस्तुतस्त्वनुगतोद्बोधकाश्रयेऽपि स्वरूपतस्तत्
प्रकारकशक्तिज्ञानासत्त्वे स्वरूपतस्तत्प्रकारकस्मरणा-

मोषमन्तरेण । स्वविषयत्वमन्तरेण । तद्विषयकत्वेनैवेति । यद्व-
स्तुज्ञानसत्त्वे नियमतो घटत्वप्रकारकघटस्मृतिर्जायते तद्वस्तुवि-
षयकज्ञानसत्त्वे । घटत्वप्रकारेण घटविषयकस्य प्रमेयत्वेन घटवि-
षयकसंस्कारवतो घटत्वेन घटविषयकस्य स्मरणस्यापत्त्या प्रकार-
त्वविशेष्यत्वनिवेशनमावश्यकमित्यतस्तथैव रीत्या स्वरूपतस्तत्प्र-
कारत्वनिवेशनप्रयोजनमाह । वस्तुत इति । अनुगतोद्बोधक
इति । यद्वस्तुज्ञानसत्त्वे नियमत एव स्वरूपतस्तत्प्रकारकस्मरणं त-
द्वस्तुविषयकज्ञानस्थल इत्यर्थः । स्वरूपतस्तत्प्रकारकशक्तिज्ञा-
नासत्त्वे । स्वरूपतस्तज्ज्ञानमन्य-

पश्चात्तच्च तादृशज्ञानस्य हेतुत्वमभ्युपगम्यमित्यलमतिपल्लवि-
तेन । अथ सामान्यतो वक्तृबुद्धिविषयतावच्छेदकधर्मावच्छि-
न्नस्य सर्वनामशक्यत्वे शक्तिभ्रमं विना कालान्तरीणपुरुषान्त-
रीयबुद्धिविषयतावच्छेदकधर्मावच्छिन्नविषयकप्रतीतिः
सर्वनाम्ना न जन्यते पितु यो यदा यस्य बुद्धिस्थस्तदा तदुच्चारि-
तपदात् तत्प्रकारावच्छिन्नविषयकैवेति नियमानुपपत्तिः ।
स्वोच्चारणानुकूलबुद्धिविषयतावच्छेदकधर्मावच्छिन्ने शक्ति-
विषयत्वे च स्वपदस्य तत्तद्व्यक्तिपरतया पदव्यक्तिभे-
देन शक्तिभेदप्रसङ्गादननुगमाद्व्युत्पत्तिविरोधश्च ।
एवं युष्मदस्मत्पदयोरात्ममात्रे न शक्तिरपि तु स्वसम्बोध्यो-
च्चारयित्रोरिवेति सम्बोध्यतावच्छेदकत्वोच्चारयितृ

---

स्वरूपतः संस्कारसत्त्वेऽनन्तरं स्वरूपतस्तत्प्रकारकस्मरणे, तादृश-
ज्ञानस्य, स्वरूपतस्तत्प्रकारकज्ञानजन्यतादृशसंस्कारस्येत्यर्थः ।
बुद्धिविषयतावच्छेदकत्वेन घटत्वादिविषयकसंस्कारवतः स्वरू-
पतो घटत्वादिप्रकारकस्मरणस्योत्पत्तौ गां तथापि कदाचिदिष्टाप-
त्तिमसम्भवात् बहुजनविवादस्याकिञ्चित्करत्वादिति ध्येयम् । व्यु-
त्पत्तिविरोधश्च । यत्तत्पदस्य व्यवहारो न दृष्टः तत्तत्पदस्य शक्तिपरताभा
वस्येत्यर्थः । स्वोच्चारणानुकूलबुद्धिप्रकारावच्छिन्नविषयताकत्वे
सति स्वोच्चारणविशिष्टविषयताकत्वमित्यर्थः । उच्चारणवैशिष्ट्यञ्च
स्वप्रयोजकबुद्धिप्रकारवन्निष्ठत्वस्वप्रयोजकबुद्धिप्रकारावच्छिन्न-
त्वोभयसम्बन्धेन, गातो बुद्धिप्रकारविशिष्टघटादिषु तत्तत्पदवा-
च्यत्वानुपपत्तिः ।

तावच्छेदकीभूयार्थितत्तावच्छेदकत्वरूपानुगतधर्मोपलक्षितचै-
त्रत्वादिकमेवप्रवृत्तिनिमित्तमित्यप्यसङ्गतं सामान्यतस्सम्बो-
ध्यतावच्छेदकत्वादेरनुगमकत्वे चैवस्य यद्युष्मत्पदसम्बोध्य-
तातस्माद्युष्मत्पदात्पदान्तरसम्बोध्यमैत्रादेश्चैत्रोच्चारि-
तास्मत्पदात्पदान्तरोच्चारयितुर्मैत्रादेः प्रतीतिप्रसङ्गो
दुर्वारएवेति स्वजन्यबोधाश्रयतया प्रयोक्त्रभिप्रायविषयताव-
च्छेदकस्वरूपस्वसम्बोध्यतावच्छेदकत्वोपलक्षितधर्मा-
वच्छिन्नेयुष्मत्पदस्यस्वोच्चारणकर्तृतावच्छेदकधर्माव-
च्छिन्नेऽस्मत्पदस्य शक्तिः स्वोच्चारणीतया स्वत्वान्तर्भावि-
णाननुगमतादवस्थ्यादिति चेन्न । स्वोच्चारणानुकूलबुद्धि-
प्रकारावच्छिन्नविषयकत्वस्वजन्यत्वोभयसम्बन्धेन तत-
दादिसर्वनामप्रकारकबोधविषयकः संकेतोभ्युपेयते,
तत्तश्च पदार्थस्य सम्बन्धघटकतया तत्पदव्यक्तित्वेन प-
दानां नविषयता अपि तु तत्पदत्वादिरूपानुपूर्वीविशेषेणैवे-
ति न पदव्यक्तिभेदेन शक्तिभेदः । सामान्यतस्तत्पदत्वा-
दिरूपानुपूर्वीविशेषावच्छेदेनैवतदुभयसम्बन्धावच्-
छिन्नबोधविषयतानिरूपितसङ्केतप्रकारतायाश्च त
न्नव्युत्पत्त्यनुपपत्तिः । कालान्तरीणबुद्धिश्चेदानीन्तन
तदादिपदोच्चारणानुकूलेति तद्विषयतावच्छेदकता-
वच्छिन्नबोधे नोपदर्शितसम्बन्धेनैतत्तदादिपदवैशिष्ट्य-
मतोऽमेश्वरेच्छायां तादृशबोधस्य तत्तदादिपदप्रकारिता

---

बोधपदजन्यत्वानवगाहिसंकेतविषयतायास्तत्त्वानुपगमा-
त्तज्जन्यत्वघटितोभयसम्बन्धनिवेशः ।

ভানমিতিনকালান্তরীয়পুরুষান্তরীয়বুদ্ধিবিষয়তা-
বচ্ছেদকাবচ্ছিন্নস্যৈব তৎপদবাচ্যতা, ভগবৎসংকেতীয়-
তৎপদজন্যোপস্থিতিপ্রকারতানিরূপিততথাবিধসংসর্গান্তঃপাতি-
ন্যা বুদ্ধিবিষয়তাবচ্ছেদকাবচ্ছিন্নবিষয়ত্ববিশেষণ-
ত্বেন বিষয়তায়া এব তৎপদবাচ্যতারূপত্বাদিতি। নন্বেবং বি-
নাতদবচ্ছিন্নবোধঃ। তদ্ধর্মাবচ্ছিন্নবিষয়তাশালি-
বোধোদ্দেশাংশে তদ্ধর্মাবচ্ছিন্নবিষয়তাঘটিতোভয়সম্ব-
ন্ধাবচ্ছিন্নবোধনিষ্ঠবিশেষ্যতানিরূপিতসংকেতীয়-
প্রকারতারূপবাচকতায়াঃ প্রকারতয়া সংসর্গতয়া বা জ্ঞা-
নস্য হেতুত্বাদন্যধর্মাবচ্ছিন্নবুদ্ধেস্তৎপ্রযুক্তে পদে
ঽন্যধর্মাবচ্ছিন্নবিষয়তাঘটিতোভয়সম্বন্ধাবচ্ছি-
ন্নসংকেতপ্রকারতায়াঃ সত্ত্বেন তদবগাহিজ্ঞানস্যাভ-
সত্ত্বানিয়মাৎ। যুষ্মদস্মচ্ছব্দস্থলে

---

তথাবিধসংসর্গান্তঃপাতিন্যা বুদ্ধের্যা বিষয়তাবচ্ছেদকাবচ্ছিন্ন-
ত্বেন বিষয়তায়া ইতি। নিষ্ঠত্ববিষয়তানিরূপিতবুদ্ধিপ্রকারাব-
চ্ছিন্নবিষয়তায়া ইত্যর্থঃ। পদাংশে তদ্ধর্মাবচ্ছিন্নবিষয়তাঘটিতে-
তি। তদ্ধর্মবন্নিষ্ঠায়া প্রযোজকবুদ্ধিপ্রকারাবচ্ছিন্নবিষয়তায়া-
ন্নিরূপিতনিষ্ঠত্ব বিষয়তানিরূপিতা সতী প্রযোজকবুদ্ধিপ্রকারা-
বচ্ছিন্নত্ববিষয়তানিরূপিতায়া উচ্চারণনিষ্ঠবিষয়তা তন্নিরূ-
পিতবিষয়ত্ববিষয়তানিরূপিতায়া বোধবিশেষ্যতায়া নিরূপিত-
প্রকারতাবৎ তৎপদমিত্যাকারকান্তাদৃশবিশেষ্যতানিরূপিতপ্র-
কারতাসম্বন্ধেন তদ্ধর্মবিশিষ্টবৎ তৎপদমিত্যাকারকজ্ঞানজ-
জ্ঞানস্য হেতুত্বাদিত্যর্থঃ।

प्येतादृश्यं वगतिश्चिन्तनीया । अथ त्वसम्बोध्ययुष्मदः स्वोच्चारयितर्यस्मदः प्रतीतेर्व्युत्पाद्यमयात्वयि हते च वर्गाजैष्यन्त्या शुद्धेन। त्वयादिकर्त्तृत्यादिवाक्यादिहेतौ कर्त्तृकमहिषासुरकर्मकत्वतादिवैधानुपपत्तिः तत्र देव्युच्चरितत्वस्य महिषासुरसम्बोध्यत्वस्य चाभावात् । त्वय्यादिकर्त्तृकमुरथकर्मकत्वतादृशैधस्यस्वयोग्यतासमादापत्तिः । त्वय्यादेस्तादृशवाक्यप्रयोक्तृत्वात्मप्रयादेस्तत्सम्बोध्यत्वादिति चेन्न । तत्र तादृशानुपूर्वीप्रकारेण सामान्यप्रत्यासत्त्या देव्यादिवाक्यस्यापि ज्ञानादृते महिषासुरयोस्तादृशवाक्यप्रयोक्तृत्वसम्बोध्यत्वप्रतिसंधानादेवयुष्मदस्मद्भ्यां देवीमहिषासुरादिप्रतीत्युपपत्तिः । यदि च तत्त्ववक्तानुवादकवाक्ययोर्विभिन्नानुपूर्वी तदानुवादकवाक्य तद्व्यक्तित्वादिना विशेषदर्शनेऽप्यानुपूर्वीप्रकारेण देव्युच्चरितत्वादिभ्रमसम्भवान्नातुर्देव्यादिप्रतीतिस्तोकारेणानुपपत्त्यभावात् । यत्रानुपूर्वीविशेषावच्छेदेनापि विशेषदर्शनं तत्र नेष्यत एव प्रतीतिरिति ।

---

एतादृश्येवगतिश्चिन्तनीयेति । स्वजन्यबोधवक्त्वेनाभिप्रायविषयता वक्तृत्वावच्छिन्नविषयकस्वजन्यत्वोभयसम्बन्धेन बोधे युष्मत्पदवान् भवतु त्वाकारकस्य सङ्केतस्य युष्मत्पदस्य लिङ्गोच्चारणकर्त्तृता वक्तृत्वावच्छिन्नविषयकत्वस्वजन्यत्वोभयसम्बन्धेन बोधोऽयुष्मत्पदवान् भवत्वित्याकारकसङ्केतस्य युष्मत्पदस्य लिङ्गोच्चारणात् नानुपपत्तिः । अत्रापि पूर्वोक्तरीत्या परिष्कार्यमतो न पूर्वोक्तानुपपत्तिरिति ध्येयम् ।

एवमन्यदीयस्वार्थतात्पर्यकोच्चारणानधीनोच्चारणरू-
पं स्वतन्त्रोच्चारणमस्मत्पदप्रवृत्तिनिमित्तानुगमकमु-
क्तस्थलेऽन्यथाप्युच्चारणं न तथा तस्यार्थप्रतिपादनद्-
वाराऽन्युच्चारणाधीनत्वादिति नास्मच्छब्दाद्दृष्टा-
दिबोधः । स्वातन्त्र्येणाहं गच्छामीत्युच्चारणस्यापि को-
गच्छतीत्यादिप्रश्नवाक्यघटक्रियाश्रवणवाक्योच्चारणा-
धीनतया स्वार्थपरत्वमुच्चारणविशेषणम् । प्रश्नादि-
वाक्यस्य चाऽहं गच्छामीत्यादिप्रकृतवाक्यतात्पर्यविष-
यपरत्वाभावादुच्चारणेऽपि विशिष्टव्यतिरेकः सुघटः । आ-
नुपूर्वीसजातीयं यद्वाक्यान्तरं तदुच्चारणानधीनत्वं तु
निवेशयितुमशक्यं शब्दानुकरणस्थले एवं समानानुपू-
र्वीकोच्चारणापेक्षानियमात् वाक्यार्थानुवादस्थले
समानार्थकवाक्यमात्रोच्चारणापेक्षणात् तत्स्वात-
न्त्र्यापत्तेर्दुर्वारत्वात् । वस्तुतस्तु वाक्यान्तरस्य क्रिया-
कर्मतया स्वघटितवाक्यार्थप्रत्यायनेच्छानधीनत्वो-
च्चारणमेव स्वतन्त्रोच्चारणम् । अनुवादस्थले चैत्रवाचेति
वाक्यान्तरस्य क्रियाकर्मतया तदर्थघटितवाक्यार्थप्रतिपाद-
यितुमेवानुवादकोऽस्मद्घटितवाक्यं प्रयुङ्क्त इति न स्वात-
न्त्र्यम् । मत्पुत्रं पश्येत्यत्र प्रकृतवाक्यस्य ज्ञानरूपक्रिया-

---

अन्यदीयस्वार्थबोधकतात्पर्यकं यद्वाक्यं तदुच्चारणाधीनं य-
त्तत्तदन्योच्चारणरूपमित्यर्थः । एतेनोच्चारणे स्वार्थबोधतात्पर्य-
त्वविरहेऽपि न क्षतिः । तदर्थं, स्वघटितवाक्यार्थं, मां पश्य मम-
मत्पुत्रं पश्येत्यपि क्वचित् पाठः ।

कर्मं तयार्थं प्रतिपादयितुमेवास्मदःप्रयोगात्तदुच्चार-
णस्य स्वातन्त्र्यनिर्वाहाय वाक्यान्तरेति । एतेन यत्त्वचैत्र-
णान्यदीयाच्चैत्रःसुन्दर इत्यादिवाक्यार्थप्रतीत्याहंसु-
न्दर इति प्रयुज्यते तत्र समानार्थकवाक्यान्तरोच्चार-
णसापेक्षत्वेऽपि न स्वातन्त्र्यक्षतिर्नवा पाण्डित्याभि-
मानिनोऽपि पुरुषस्यान्यस्यायमहं पण्डित इति जाना-
तीत्यन्यदीयोच्चारणस्य स्वातन्त्र्यापत्तिः । यथैवं री-
त्याव्यवस्थितोक्तस्थलेऽस्मत्पदेनोच्चारयितृ पुरुषविष-
यकप्रतीतिवारणेऽप्यभिमानिनस्ते मप्रत्ययेऽपि दुरुपपा-
दएवतस्योच्चारणाभावेनास्मत्पदावाच्यत्वादि-
ति चेत्सत्यम् । स्वतन्त्रोच्चारयितुःसर्वनामस्मदर्थत्वेऽस्या-
देवेयमनुपपत्तिस्तदेव न स्वतन्त्रोच्चारितास्मत्पदस्यैवतद्वा-
चकत्वात् निरुक्तस्वतन्त्रोच्चारणरहितस्य तु स्वघटितवाक्या-
र्थकर्मकवाक्यान्तरस्य क्रियाकर्तृत्वं वत्प्राप्तिः । एवञ्च मयात्व-
यि चैत्रे चैत्रेत्यादौ तादृशक्रिया इति देव्युवाचेति वाक्यान्तर-
स्योक्तिक्रियैव तस्याहं त्वं देव्या इति भ्रमं विनैव प्रतीतिरुपपा-
दयितुं शक्यते । स्वघटितवाक्यार्थकर्मकवाक्यान्तरस्य क्रि-
यात्वं च तादृशार्थकर्मत्वेन वाक्यान्तरप्रतिपाद्यत्वं ते-

---

स्वपाण्डित्याभिमानी पुरुष इति । अभिमानी पुरुषोऽवधारि-
ताहं पण्डित इति वाक्यार्थप्रतीत्यायमहं पण्डित इति जानाती-
त्यभिमानेन तादृशोच्चारणस्य स्वातन्त्र्यापत्तिशङ्का अतोऽभिमा-
नी पुरुषोऽमी निरवविशेषण, मव्यवस्थितोक्तस्थले । अयमहं पण्डित इति
जानातीति स्थले, तादृशार्थकर्मकत्वेन वाक्यान्तरप्रतिपाद्यत्वं स्व-

माहं पश्यत्विति विद्वांसं पश्यत्यादौ दर्शनादिक्रियाया
अस्मच्छब्दघटितवाक्यार्थविषयकत्वसंभवेऽपि तेन रूपे-
णासमभिव्याहृतवाक्यान्तरप्रतिपाद्यतया न तत्कर्तुर-
स्मच्छब्दात् प्रतीतिः । युष्मदिति पदघटितवाक्यान्तरक्रि-
याप्रतिपत्तावेव तत्कर्तुर्वाक्यान्तरप्रतिपाद्यक्रियाक-
र्मत्वं सुग्रहं तद्ग्रहणं च अस्मद्घटितानुगमकरूपग्रहेणा-
स्मच्छब्दघटितवाक्यार्थप्रतीतौ तस्यापि पदात् स्वस्या
वाक्यान्तरक्रियाप्रतिपत्तिरित्यन्योन्याश्रय इति चेन्न ।
वाक्यान्तरजन्यत्वोपरक्तप्रतिपत्तिविषयतया वक्तृबुद्धि-
स्थत्वस्यैव क्रियायां विशेषणत्वोपगमात्प्रतिपत्तेः पूर्वम-

---

घटितवाक्यार्थकर्मकत्वविषयतानिरूपितवाक्यान्तरजन्यप्रतीति-
विषयीभूताश्रयत्वमित्यर्थः । वाक्यान्तरप्रतिपाद्यक्रियाकर्मत्वं सु-
ग्रहमिति । वाक्यान्तरजन्यप्रतीतिविषयत्वाश्रयत्वमित्यर्थः ।
वाक्यान्तरप्रतिपाद्यक्रियाकर्मत्वं सुग्रहमिति । वाक्यान्तरजन्य-
प्रतीतिविषयत्वाश्रयक्रियाकर्मत्वं सुग्रहं निश्चयात्मकग्रहविषय इ-
त्यर्थः । अन्यथा पदार्थसत्त्वेऽपि सन्देहो भवति । क्रियाप्रतिपत्तौ
तद्विषयत्वावधारणेन तादृशविषयतात्मकपदार्थनिश्चयो भव-
तीति भावः । वाक्यान्तरप्रतिपाद्यतया । वाक्यान्तरप्रतिपत्तिविषय-
त्वेन । वक्तृबुद्धिस्थत्वस्यैव । वक्तृबुद्धिविषयत्वस्यैव । तथा चास्म-
द्घटित वाक्यार्थकर्मत्वविषयतानिरूपितवाक्यान्तरप्रतिपत्तिवि-
षयत्वविषयतानिरूपितवक्तृबुद्धिविषयताश्रयत्वं क्रियाविशेषणं
पर्यवसितं, वक्तृबुद्धिस्थस्वघटितवाक्यार्थकर्मत्वविषयतानिरूपित-

त्तिनुसारम् । एवं चबुद्धिविषयतावच्छेदकत्वस्य प्रवृत्ति-
निमित्तानुगमकत्वप्रवादोऽपि संगच्छते । उच्चारक-
र्तृत्वगर्भानुगमकत्वगीरेभिश्चाणांबुद्धिस्थत्वनिवेशन-
बीजं तु नावधारयाम: । एवं युष्मत्पदप्रवृत्तिनिमित्ता-
नुगमकं निविष्टं सम्बोध्यत्वमपि वाक्यान्तरस्थक्रियाक-
र्मत्वेन स्वघटितवाक्यार्थानवगाहिनीयास्वजन्यप्रती-
तिस्तदाश्रयत्वे सत्येच्छाविषयत्वमनुवादकत्वेनयः सम्बोध्यते
स्वमानुवादकेनोच्चरितयुष्मच्छब्दनिरूपितनिरुक्तसम्बोध्य-
तावान्त्वकप्रतिपाद्यतयायुष्मदर्थघटितवाक्यार्थघटि-
तायेवाक्यार्थकर्मकोक्तिक्रियाघटितवाक्यार्थस्तद्विष-
यक स्वविशिष्टप्रतिपत्त्याश्रयत्वेनैव तस्यानुवादकेच्छा-
विषयत्वात् । यदि चेतिपदघटितवाक्यार्थप्रतीतिरू-

---

वच्छेदकत्वं प्रवृत्तिनिमित्तानुगमकं ताहृशविषयतावच्छेदकत्वस्य
च्छाविषयतावच्छेदकत्वस्य प्रवृत्तिनिमित्तानुगमकत्वसम्भवेऽपि
प्रवादस्यार्थबुद्धिपर्यन्तानुधावनमित्याह । एवमिति । स्वसम्बोध्यत्व-
मपीति । यनवगाहनीति । वाक्यान्तरस्थक्रियाविषयतानिरू-
पितकर्मत्वविषयतानिरूपितस्वघटितवाक्यार्थविषयताशून्या
त्यर्थ: । * उक्तिक्रियाकर्मत्वेनैव भानादिति । स्वघटितवाक्या
र्थकर्मकोक्तिक्रियाकर्तृत्वदेवो विषयकस्वजन्यबोधवत्सुरथो भवतु

---

* सम्बोध्यतावानित्यस्यार्थ तस्यानुवादकपुरुषीयवाक्यार्थ-
कर्मकोक्तिक्रियाघटितमत्र वाक्यार्थवटकयुष्मदर्थघटितावा-
न्तरवाक्यार्थप्रतीत्याश्रयत्वेनाभिप्रायविषयत्वेऽपि ताहृशाभि-
प्रायेऽपि ताहृशावान्तरवाक्यार्थस्योक्तिक्रियाकर्मत्वेनैव भाना-
दिति सम्यक्पाठस्तदनुसारेण टीका ।

फलेच्छाधीनायुष्मदर्थघटितप्रतीतिविषयिणीतादृशवाक्या-
र्थांशेप्रतिपाद्यत्वानवगाहिन्यपितादृशवाक्योच्चार-
णानुकूलावक्तुरिच्छासम्भवतीतितादृशेच्छामादाया-
नुवादकसम्बोध्यस्यसम्बोध्यतापत्तिरितिमन्यतेतद्वाक्या-
न्तरार्थप्रतीतीच्छानधीनत्वमपीच्छाविशेषणंदेयमि-
तिमयारवयिहतेचैवेत्यादौनसुरथादिविषयकप्रती-
ति, रेवमभान्तस्यतत्रमहिषासुरादिप्रतीतिनिर्वाहाय
वाक्यान्तरस्यस्वघटितवाक्यार्थकर्मकक्रियाकर्मत्वस्यापि
युष्मदःशक्त्यन्तरं स्वीकरणीयम् । तत्रदेवीमहिषासुर-
मित्थ वाचेत्यादिवाक्यस्यक्रियाकर्मरवं महिषासुरादेरिति-
तस्यापिरवयीत्यादिशब्दार्थतापपत्तिः । अत्रापि पूर्ववत्

न्यबोधवत्सुरथोभवतुइत्याकारिकेच्छायां वाक्यान्तरस्यउक्ति-
क्रियाविषयतानिरूपितकर्मत्वविषयतानिरूपितस्वघटित वा-
क्यार्थविषयताशून्यत्वाभावादित्यर्थः । मन्यतइति । मद्वाक्या-
र्थबोधिवावान्तरवाक्यार्थबोधस्यहेतुतयातादृश फलेच्छाधी-
नायास्तादृशोपायविषयकेच्छाया आवश्यकत्वादिति भावः । वा-
क्यान्तरार्थप्रतीतीति । वाक्यान्तरार्थक्रियाकर्मत्वविषयता निरू-
पितस्वघटितवाक्यार्थविषयताशालिप्रतीतीच्छा नधीनत्व-
मिपीत्यर्थः । तादृशप्रतीतीच्छानधीनत्वमितिपाठेपिउक्तएवार्थः ।
अत्रापिपूर्ववदिति । अस्मच्छब्दशक्त्यनुगमस्यलीयोक्तरीत्यारवंप-
ण्डितइतिविद्वांसंपश्येत्यादौ दर्शनकर्मण्यायुष्मत्पदशक्तौ वा-
रणायस्वघटितवाक्यार्थकर्मकत्वे नवाक्यान्तरप्रतिपत्ति विषय-
ताश्रयक्रियाकर्मण्येव शक्तिर्वाच्यातथा च प्रागुक्तरीत्यान्यो-

स्वघटितवाक्यार्थविषयकत्वान्वितक्रियाकर्मतयावाक्यान्तरप्रतिपाद्यत्वेनयावक्तृबुद्धिस्तद्विषयतावच्छेदकत्वेनानुगतामांचैतन्यमहिषासुरत्वादीनांप्रवृत्तिनिमित्तत्वंबोध्यम्। सम्बोध्यत्वघटितानुगमकशरीरेचबुद्धिविषयतावच्छेदकत्वनिवेशनंनिष्प्रयोजनमनुपादेयमेव। सम्बोध्यतावच्छेदकेबुद्धिप्रकारत्वस्याव्यावर्तकत्वात्। अथतात्पर्यसत्त्वेऽहमस्मीतिमैत्रो जानातीत्यादिचैत्रवाक्यस्यास्मच्छब्दाच्चैत्रोपिप्रतीय-

न्याश्रयवृत्तिस्वघटितेत्याद्युरिति:। स्वघटितवाक्यार्थविषयकत्वान्वितेति। स्वघटितत्ववाक्यार्थविषयकत्वविषयकत्वनिरूपितायाधेयत्वसम्बन्धेनमहिषासुरनिष्ठविषयता निरूपितकर्मत्वविषयतानिरूपितवाक्यान्तरस्थक्रियाविषयतातन्निरूपितकर्तृत्वविषयतानिरूपितविषयतावद्देवीवृत्तिसाधिकावृत्त्याकारकत्वसाधनताज्ञानीयतादृशक्रियाकर्मत्वविषयता निरूपितवाक्यान्तरजन्यप्रतिपत्तिविषयतानिरूपिताधेयत्वसम्बन्धावच्छिन्नविषयतात्मिकायास्तादृशक्रियाकर्मतयावाक्यान्तर प्रतिपाद्यत्वेनवक्तृबुद्धिविषयताया:महिषासुरादेरघतत्वमेवेति। वाक्यान्तरस्थक्रियाकर्मतामुख्याग्राह्या,नात: तादृशक्रियाकर्मतयावाक्यान्तरप्रतिपाद्यत्वेनवक्तृबुद्धिविषयताया: स्वघटितवाक्यार्थसत्त्वेपिक्षति:। अथवास्वघटितवाक्यार्थविषयकत्वप्रकारतानिरूपितक्रियात्वावच्छिन्नविशेष्यत्वावच्छिन्नकर्मत्वेप्रकारतानिरूपिताधेयत्वसम्बन्धावच्छिन्नायाविषयता तन्निरूपितविषयताविवक्षणान्नानुपपत्तिरितिधेयम्।

तेतच्चैतस्यस्वघटितवाक्यार्थकर्मकक्रिया कर्तृत्वा-
भावात् तदुच्चारणस्यनिरुक्तस्यातन्त्वा भावाच्चानुप-
पत्ति, एवंचैतत्त्वयाभुक्तमितिमयाश्रुतमित्यत्रचैतस्ययु-
ष्मच्छब्देनप्रत्यायनात्तस्यचवाक्यान्तरस्यक्रिया कर्म-
त्वस्यानिरुक्तेच्छाविषयत्वरूपसम्बोध्यत्वस्यचाभावा-
त्कथमुपपद्यतामितिचेत्तर्हिनस्यातन्त्यमुच्चारणविशे-
षणम् । सम्बोध्यत्वघटकेच्छायांनिरुक्तेच्छानधीनत्वा-
दिविशेषणस्युत्याज्यमेव । मयात्वयिहतेचेत्यादौता-
त्पर्यविरहादेवानुवादकतत्सम्बोध्ययोर्मयात्वयि
हतेत्यादिनाऽप्रतिपादनोपपत्तेः । नचैवं
तावच्छेदकावच्छिन्न एवयुष्मदस्मदोरप्यास्तांशक्तिः
किंसम्बोध्यस्योच्चारयितृतावच्छेदकावच्छिन्नेशक्ति-
स्वीकारेणतात्पर्यादेवातिप्रसङ्गभङ्गादितिवाच्यम् ।
तात्पर्यसत्त्वेपिचैत्रोच्चारितादहंकरोमीतिवाक्याच्-
चैत्रबोधयितुंप्रयुक्तात्त्वङ्गच्छेत्यादिवाक्याच्चोच्चार-
यितृत्वसम्बोध्यत्वभ्रमंविनामैत्रादेर्बोधस्यसर्वानुभववि-
रुद्धत्वात् । अन्यथातत्तात्पर्येणस्वरसतएवतथाप्रयो-
गापत्तेः । इदंतुतत्त्वम् । अहंपण्डितइतिजानाती-
त्युवाचेत्यादिस्थलेसर्वत्रवाक्यार्थस्यकर्मतानसम्भवतिबाधि-
तवाक्यार्थस्थलेतदसम्भवात् । नचबाधितवाक्यार्थ-
स्थलेभ्रमरूपैवतत्कर्मत्वप्रतीतिरितिवाच्यम् । विशेष-
दर्शिनाभ्रान्तिज्ञेनतथाप्रयोगात्तस्यवाक्यार्थज्ञाना-
सम्भवेनतदनुपपत्तेः । नचाहार्यवाक्यार्थज्ञानादेव-

विनापिविशिष्टवाक्यार्थबुद्धिं विशेष्यविशेषणप्रकारकत्वविशेष्यकत्वाभ्यांविशिष्टज्ञानज्ञानादेववाविशेषदर्शीतथाप्रयुङ्क्तइतिवाच्यम् । एवमपिविशेषदर्शिनोभ्रान्तिज्ञ-पुरुषीयतथाविधवाक्याद्बोधानुपपत्तेर्वज्रलेपत्वात् । तस्मात्तत्रेतिपदंनतद्वाक्यप्रतिपाद्यता-नवच्छेदकीभूतधर्मावच्छिन्नपरम् । अपितुतद्वाक्य-जन्यज्ञानसमानाकारकपरम् । तादृशस्येतिपदार्थो भेदसम्बन्धे नयथासम्भवंधात्वर्थेधा'त्वर्थतावच्छेद-कज्ञानेचविशेषणमित्यवेवोपगन्तव्यम् । तथाचसर्वं-नैयायिकोक्तस्वघटितावान्तरवाक्यस्थलेइतिपदंतत्परमे-व । तादृशवाक्येनगवित्यस्य । इत्थं नैयायिकसम्मतस्व-स्वरूपमेवेतिशब्देनपरामर्शोऽर्थंसमुपस्थाप्यतेनतुयु-ष्मदस्मच्छब्दार्थघटितवाक्यार्थइतिसम्बोध्योच्चारणकर्त्रो-रेवयुष्मदस्मदोःशक्तिरिति । त्वंस्थूलःअहंस्थूलस्त्वंस्वर्गं-भोक्ष्यसिअहंस्वर्गंभोक्ष्ये इत्यभयत्रैवयुष्मदस्मदोर्मुख्य-त्वात्सम्बोध्योच्चारयितृशरीरतदात्मनोरेवयुष्मदस्म-दर्थताबोध्या । सर्वेघटाकृपवन्त इत्यादौसर्वपदादुद्दे-

---

इत्येवोपगन्तव्यमिति । तथाचैतद्वाक्यजन्यज्ञानसमानाकारकाभिन्न महिषासुरनिष्ठज्ञानानुकूलव्यापारवतीदेवीत्यन्वयबोधःतादृशवाक्यजन्यदेवीकर्तृकमहिषासुरकर्मकघातादिबोधस्तुतादृशवाक्याद्देव्यूचरितत्वभ्रमादेवसिद्ध इति । तादृशवाक्येनवेति । विशिष्टाप्रसिद्धस्थलीयवाक्येनवेत्यर्थः । वाकारोनवस्थायामतोन पूर्वोक्तानुपपत्तिरिति । युष्मदस्मदर्थंत्वंबोध्यमिति । तथाचस्वोच्चारणकर्तृतावच्छेदकत्वोपलक्षितधर्मा-

वच्छिन्नशक्तिमत्त्वोच्चारणकर्तृता वच्छेदकशरीरवृत्तिद्रव्यत्व-
व्याप्यजात्यवच्छिन्नेऽपि अस्मत्पदस्य शक्त्यन्तरं वा वाच्यम् । द्र-
व्यत्वव्याप्यत्वञ्च द्रव्यत्वनिष्ठभेदप्रतियोगितानवच्छेदकत्वं द्रव्य-
त्वव्याप्यजातिव्याप्यत्वं च स्वसमानाधिकरणभेदप्रतियोगिता-
वच्छेदकत्वसम्बन्धेन तादृशशरीरवृत्तिजातौ च मनुष्यादिभिन्न-
त्वमुपलक्षणविधया निवेशनीयमिति ध्येयम् । एवं युष्मत्पदस्थले-
स्वजन्यबोधवक्तृत्वेनाभिप्रायविषयवृत्तिज्ञानावच्छेदकशरीरवृ-
त्तिद्रव्यत्वव्याप्यजातिव्याप्यजात्यवच्छिन्ने शक्त्यन्तरं स्वीकार्यं व्या-
प्यादिकञ्च पूर्ववदिति । अथ ग्रामं गच्छावः ग्रामं गच्छाम इत्या-
दिवाक्यघटकास्मच्छब्दात् चैत्रोच्चरितात् चैत्रमैत्रादिबोधस्या-
नुभवसिद्धतया मैत्रादेरुच्चारणकर्तृत्वाभावात्तादृशबोधानुप-
पत्तिरिति चेन्न । तादृशस्थले चैत्रादिसमुदाये लक्षणास्वीकारात् ।
अतएव द्विवचनबहुवचनस्थले लक्षणैवगतिरिति वैयाकरणसि-
द्धान्तदीपिकाकर्तृभिरभिहितम् । न च तादृशोच्चारकपुरुषमन-
न्तर्भाव्य केवलचैत्रादिबोधो लक्षणया स्यात् तादृश लक्षणाया-
आधुनिकत्वात् । उच्चारकपुरुषमनन्तर्भाव्यैव लक्षणाया निरूढ-
त्वं बोध्यम् । आधुनिकलक्षणादरे तु तादृशबोधो भवत्येव सि-
किन्तु न स्वारसिकप्रयोग इति । केचित्तु स्वोच्चारणकर्तृवृत्तिस्वप्रयो
जकबुद्धिविषयतावच्छेदकधर्मावच्छिन्ने ऽस्मत्पदशक्तिस्वीका-
रेणैतत्स्थले उच्चारकानुच्चारक पुरुषसमुदाय विषयक-
बोधस्य शक्त्योपपत्तिरिति प्राहुः तन्न । तथापि द्रव्यत्वप्रकारकद्रव्य-
बोधतात्पर्येणापि शक्त्या तादृशप्रयोगापत्तिरिति ।

श्यतावच्छेदकीभूतघटत्वावच्छिन्नस्याशेषताप्रतीते-रशेषत्वं सर्वपदार्थः। नन्वत्राशेषत्वं न विधेयशून्यात्वृत्ति-तत्तदुद्देश्यतावच्छेदकवत्त्वम्। केवलान्वयिनोऽत्र-विधेयतात्र विधेयशून्यत्वस्याप्रसिद्धेः। यत्र विधे-यशून्ये उद्देश्यतावच्छेदकीयसम्बन्धविशेषणावृत्तेरप्र-सिद्धिस्तत्र सर्वे घटा जातिमन्त इत्यादावव्याप्त्यभावापत्तेः। पदान्तरादुपस्थिते उद्देश्यतावच्छेदकघटत्वादिवि-शिष्टे सर्वपदोपस्थाप्यव्याप्तिविशिष्टघटत्वाद्यवच्छिन्नस्य-कथंचिदन्वयसम्भवेऽप्यनुभवविरोधात्। घटत्वस्यानु-पस्थितिदशायामपि सर्वे घटा इत्यादिवाक्यादन्वयबो-धस्यानुभविकतयाऽव्याप्यत्वेनैव घटात्वादेः सर्वपदार्थत्व-स्वीकरणीयतया तत्रान्वयबोधस्य निधर्मितावच्छेद-

ननु व्यधिकरणधर्मावच्छिन्नावच्छेदकताकभेद इव व्यधि-करणधर्मावच्छिन्नावच्छेदकताकात्यन्ताभावस्य केवलान्वयित्व-न्ये भट्टाचार्येणास्वीकृतत्वात्प्रमेयत्वावच्छिन्नाभावनिष्ठावच्छे-दकताकाधिकरणनिष्ठावच्छेदकतानिरूपितनिरूपितत्वनिष्ठा-वच्छेदकताकवृत्तित्वावच्छिन्नप्रतियोगिताकाभावविलक्षणा-केवलान्वयिविशेषे नानुपपत्तिरत आह। सर्वे घटा जातिमन्त-इति। ननु विधेयव्याप्यत्वमभाववद्वृत्तित्वसम्बन्धेन विधेया-भावविशिष्टउद्देश्यतावच्छेदकताघटकसम्बन्धेन स्वाधिकरणा-ताकत्वम्। अभाववृत्तित्वम् विशेषणताविशेषसम्बन्धावच्छिन्नं-याह्यमित्युभयत्रैव गतिरस्त्येवेत्यतोऽनुभवविरोधरूपदोषमाह। अनुभवेति। दण्डवान् रक्तदण्डवानितिवत् विधेयांशेऽपधि-कावगाहिताद्दशबोधस्यानुभवसिद्धत्वादितिभावः।

कतयाविपरीतविषयकसंशयाद्यविरोधित्वे नाकिंचि-
त्करत्वापाताच्च । नापितत्तदुद्देश्यतावच्छेदकव्या-
पकतद्विधेयवत्त्वं, तदवच्छिन्ने विधेयानन्वयप्रसङ्गा-
त् । नापिविधेयान्वयिव्यापकतापर्यन्तमेवसर्वपदा-
र्थः । नामार्थयोर्भेदान्वयबोधस्याव्युत्पन्नत्वात् । ना-
प्यभेदेनरूपवद्घात्मकविधेयान्वयिघटत्वादिव्यापक-
एवतदर्थः । तथासतिसर्वेवेदाःप्रमाणमित्यादौसर्व-
पदस्यप्रमाणपदेनैवसमानाधिकरण्यात्तत्समानलिङ्ग-
वचनकत्वापत्तिः । सर्वेघटावर्तन्तइत्यादौक्रियारूप-
विधेयव्यापकस्याभेदान्वयेसर्वपदस्यनपुंसकत्वापत्तेश्च ।
व्यापकतायाभेदान्वयोपगमेनामार्थधात्वर्थयोर्भेदान्वयविर-
हनियमात्तस्यभङ्गापत्तेः । यत्त्वशेषत्वंनसर्वपदार्थः ।
उद्देश्यतावच्छेदकावच्छेदेनविधेयान्वयोपगमादेवतल्ला-
भोपपत्तेः । किन्त्वनेकत्वमेव । अनेकत्वंचोद्देश्यता-
वच्छेदकसमानाधिकरणभेदप्रतियोगित्वम् । अतए-
वचसर्वंगगनंशब्दवदित्यादिप्रयोगोनभवति । एवंच-
सर्वेघटाइत्यादौघटनिष्ठान्योन्याभावप्रतियोग्यभिन्ना-

---

वधेयानन्वयप्रसङ्गादिति।तथा च सर्वेघटारूपवन्तइत्यादितोघ-
टत्वव्यापकरूपवन्तोघटारूपवन्तइत्यन्वय बोधस्यस्वीकरणीयत-
याविधेयांशेन्यूनावगाहितयाताहशबोधस्य केनाप्यनङ्गीकारा त्
इतिभावः । तस्यभङ्गापत्तेरिति । नचाख्यातार्थाश्रयत्वएवताह-
शसर्वपदार्थस्याभेदेनान्वयेतद्दोषवारण सम्भवादितिवाच्यम् ।
आख्यातार्थविशेष्यकनामार्थान्वयस्याव्युत्पन्नत्वादिभावः ।

इत्यर्थः प्रतीयते । नचैवं घटत्वादिसामानाधिकरण्यमात्रेणाविधेयान्वयतात्पर्येण सर्वे घटा नीला इत्यादिप्रयोगापत्तिः । सर्वंपदार्थविशेषितोद्देश्यतावच्छेदकावच्छेदेनैव विधेयान्वय इति नियमात्सर्वं प्रमेयमित्यादौ प्रमेयत्वादिविधेयकोद्देश्यवाचकवस्त्वादिपदमध्याहृत्यैव प्रतीतिः । अन्यथोद्देश्यतावच्छेदकीभूतव्याप्यधर्मानुपस्थित्या तद्व्यापकत्वार्थकत्वेप्यनुपपत्तेरिति । तदपि न युज्यते । गगनादावपि द्वित्वावच्छिन्नतद्भेदसत्त्वे न सर्वपदस्यानेकार्थत्वमुपगम्यापि सर्वं गगनमित्यादिप्रयोगस्य दुर्वारत्वात् । तत्तदुद्देश्यतावच्छेदकसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वस्य तत्तदुद्देश्यतावच्छेदके सर्वत्र बाधितत्वेन तत्प्रतीतेर्दुरुपगमत्वात् । सामान्यतः प्रतियोगिवृत्त्यन्यत्वस्य वृत्तिमद्वृत्तित्वात्स्वप्रतियोगिवृत्तयोयेतादृशभेदास्तद्भेदकूटस्य च दुरवगमतया तद्विशेषणेन द्वित्वाद्यवच्छिन्नभेदव्यावृत्तेरपि दुःस्थत्वात् ।

---

सर्वत्र बाधितत्वेनेति । न चोद्देश्यतावच्छेदकसमानाधिकरणाभेदप्रतियोगितावच्छेदकत्वपर्याप्त्यनुयोगितावच्छेदकत्वस्य उद्देश्यतावच्छेदके निवेशेपि सर्वं गगनं शब्दवत् इति वारणासम्भवः गगनत्वेपि गगनत्वसमानाधिकरणोभयभेदप्रतियोगितावच्छेदकत्वस्य सत्त्वात् इति वाच्यम् । उद्देश्यतावच्छेदकसमानाधिकरणभेदप्रतियोगितावच्छेदकत्व पर्याप्त्यनुयोगितावच्छेदकत्वस्य उद्देश्यतावच्छेदकतापर्याप्त्यनुयोगितावच्छेदके एव तात्पर्यात् ।

वस्तुवायथा कथंचित्तद्व्यावृत्तिः । तथापिचानेकत्वमा-
त्रस्यसपर्वंपदार्थंत्वेऽवच्छेदकात्र च्छेदेनान्वयेवच्छेद-
कैककदेशेव्यापकताविधानस्यानुभवविरुद्धतयासर्वं घ-
टारूपवन्तइत्यादौघटनिष्ठभदे प्रतियोगिघटत्वस्योद्दे-
श्यतावच्छेदकतयाशुद्धघटत्वव्यापकत्वादिभानानु-
पपत्त्याघटत्वसामानाधिकरण्ये नरूपादिमदन्यत्वनि-
श्चयदशायामपितादृशवाक्याच्छाब्दबोधापत्तिर्दुर्वारै-
व । एवंविशेष्यतावच्छेदकव्यापकतायाएवविशेषणा-
संसर्गांशेसंसर्गविशेषणीभूतविशेषणांशेवाभानात्स-
र्वेषुघटेषुरूपमित्यादौघटत्वादेर्विशेष्यतानवच्छेदकत्वे-
नरूपादौव्यापकत्वभानंदुर्लभमापद्येत । नचतत्रसप्त-
म्यर्थाधेयत्वादौनिरूपकतासम्बन्धावच्छिन्नव्यापकता-
सम्बन्धेनैवप्रकृत्यर्थस्यघटादेरन्वयः स्वीक्रियतेघटादे-
र्व्याप्यताचतादात्म्येनव्यापकता चयादृशरूपावच्छि-
न्नेष्वाधेयत्वादेरन्वय-

---

स्वसमानाधिकरणस्वनिरूपकत्वोभयसम्बन्धेन प्रतियोगिताविं-
शिष्टान्यत्वमुद्देश्यतावच्छेदकसमानाधिकरणभेदेनिवेशनीयम-
तोनोभयभेदमादायदोषइत्यभि प्रायेणाह । कथञ्चिदव्यावृत्ति-
रिति । एकदेशव्यापकत्वास्वीकारेनोक्तदोष इत्यतआह । एव-
मिति । विशेष्यतावच्छेदकव्यापकतायाः विशेषणसंसर्गांशे भा-
नोपगमेसमवायेनपर्वतस्तद्रूवापनित्यादिबोधस्यप्रमात्वापत्तिः
समवायस्यैक्यमतेतद्रूप प्रतियोगिसमवायस्यपर्वतत्वाव्यापक-
त्वादाह । संसर्गविशेषणीभूतविशेषणांशेइति ।

स्तद्वच्छिन्ननिष्ठाधेयताात्वाावच्छिन्नसंसर्गः, अतोरूप निष्ठाधेयत्वादेराधेयतात्वादिनाद्रव्यत्वाव्यापकत्वेपि नातिप्रसङ्गः। एवंरूपनिष्ठाधे यतात्वादेःपदादनुपस्थित- त्वेपिनक्षतिः । तथासत्यपिताद्दशरूपस्यसंसर्गघटकत- याभानेविरोधाभावादितिवाच्यम् । उक्तव्यापकतायाः संसर्गत्वेमानाभावात्। अस्तुवोद्देश्यविधेययोर्विशेषण- विशेष्यभाववैपरीत्येपिविधेयांशेउद्देश्यतावच्छेदकव्या पकत्वस्योद्देश्यविधेयभावम हिम्नैवसंसर्गतयाभानंभ- वतुचोद्देश्यविशेषणतयोपस्थितस्यापिविधेयेपारतन्त्र्ये णान्वयोव्युत्पत्त्यविरुद्धः।

तदवच्छिन्ननिष्ठाधेयतात्वाद्यवच्छिन्नसंसर्गइति। तथाचसर्वेषुघ- टेषुरूपमित्यादौताद्दात्म्येनघटवन्निष्ठाभावप्रतियोगितानवच्छे- दकरूपवन्निष्ठाधेयत्ववत्सम्बन्धे नघटादेराधेयतायामनुपगमा- न्नानुप पत्तिरिति ॥ नातिप्रसङ्गइति ॥ सर्वेषुद्रव्येषुरूपमित्या- द्यतिप्रसङ्गइति। तथासत्यपि ॥ पदानुपस्थितितत्त्वे पि । माना- भावादिति । ताद्दशसंसर्गेमानाभावेपिसम्बन्धविशेषांशेविशेष्य- तावच्छेदकव्यापकत्वस्यसंसर्ग विधयाभानेपिनक्षतिः। उद्देश्य विधेयभावस्थलेविधेयांशेउद्देश्यतावच्छेदकव्यापक त्वस्यसंसर्ग- विधयाभानंसम्बन्धविशेषणांशेविशेष्य तावच्छेदकव्यपकत्ववत् अनुभवसिद्धमेवेत्याह । अस्तुवेति । ननूद्देश्यविशेषणतयोपस्थि- तस्यघटत्वव्यापकत्वसम्बन्धे नविधेयांशेभानोपगमेएकत्रविशेष- णतयोपस्थितस्यान्यत्रविशेष णतयानभानमितिनियमभङ्गइत्य- तआह । भवतुचेति । तथाचैकत्रविशेषणतयोपस्थितस्यान्य- त्रस्वातन्त्र्येणान्वयोव्युत्पत्तिविरुद्धएवनतुपारतन्त्र्ये णेतिभावः।

नामार्थयोरपिभेदेन पारतन्त्र्येणान्वयो व्युत्पत्तिंमा-
विरौत्सीत् तथापिसर्वंपदस्ययत्रविधेयवाचकपदसा-
मानाधिकरण्यं तत्रविधेयांशेउद्देश्यस्यतत्सम्बन्धस्यवा-
नुभवसिद्धो व्याप्तिबोधोदुरुपपादः । एवंघटेनसर्वाणि
रूपाण्यपितुकानिचिदेवेत्यादौरूपनिष्ठभेदप्रतियोगिरू-
पत्वावच्छिन्नाभावोघटादौ बाधितइत्ययोग्यताप-
त्तिः । नचतत्रतादृशरूपत्वादिसामानाधिकरण्ये नघ-
टादिवृत्तित्वाभावः प्रतीयतेसचाबाधितएवनञ्सम-
भिव्याहारस्थलेऽशेषत्वभानानुपोगमेतिविरुद्धादिति-
वाच्यम् । एवंसतितत्रघटत्वावच्छिन्न-

ननुनामार्थयोर्भेदेनान्वयबोधस्याव्युत्पन्नत्वात् कथंतादृशबोध
इत्यतआह । नामार्थयोरिति । तथाचपारतन्त्र्यातिरिक्तस्थल
एवतथाव्युत्पत्तिरितिभावः । उद्देश्यस्याधारतासम्बन्धेनैवव्या-
प्तिघटकत्वंवाच्यमितितस्य वृत्यनियामकतयाव्याप्तिघटकत्वंन
सर्वमतसिद्धमतआह । त तृसम्बन्धस्यैवेति । ननुसर्वपदसम-
भिव्याहारस्थलेव्यापकत्वरूपा शेषत्वबोधकत्वमनुवसिद्धं तच्चै-
तन्मतेवच्छेदकावच्छेदेनचान्वयएवलभ्यतेनसमभिव्याहारस्थ-
ले रूपत्वसमानाधिकरणेघटवृत्तित्वाभावभानोपगमेतादृ-
शानुभवविरोधइत्यतआह । नञ्समभिव्याहारस्थले इति ।
तथाचतत्वरूपनिष्ठान्योन्याभावप्रतियोगित्वरूपमनेकत्व मा-
त्रं रूपभासतेइतिभावः । एवंसतीति । घटरूपेघटेतरवृत्तित्-
वाभावभानोपगमेसतीत्यर्थः ।

स्योद्देश्यत्वानिर्वाहात् । नचतत्तद्रूपस्योद्देश्यत्वं प्रथम मनिर्दिष्टत्वात् ।

उद्देश्यत्वानिर्वाहादिति । तथाचशाब्दबोधउद्देश्यविधेयभावस्यानु भवसिद्धतयातद्विरोधइति भावरूपस्यउद्देश्यत्वंशङ्क्ते । नचेति । प्रथममनिर्द्दिष्टत्वादिति । इदंतुआपाततउद्देश्यवाचकपदस्यविधेयवाचक पूर्व्ववृत्तित्वेनप्रति सन्धानस्यैवापेक्षणीयत्वात् । अतएववह्निव्याप्यधूमवानित्याद्युपनयघटकीभूता यांपदस्य उद्देश्यवाचकत्वोपपत्तेः स्वयमेवावयवग्रन्थे उक्तत्वादितिध्येयम् । नचोद्देश्यतावच्छेदकव्यापकविधेयव्याप्यधर्म्मावच्छिन्न एवलाघवाच्छक्तिरस्तुकिंगुरुतरत्तादृशरूपपर्य्याप्तिकधर्म्मावच्छिन्नेशक्तिकल्पनयाइतिवाच्यम् । सर्वंद्रव्यंरूपवदित्यादौद्रव्यत्वव्यापकपर्य्याप्तिकरूपवद्दव्याप्यपर्य्याप्त्यप्रसिध्या तादृशवाक्यस्याप्रमाण्यभियासर्वंपदशक्तेरेवाग्रेखण्डशः स्वीकरणीयतया तादृशस्थले उद्देश्यतावच्छेदक द्रव्यत्वव्यापकपर्य्याप्तिकधर्म्मावच्छिन्नेरूपवद्भेद बोधकतयाप्रामाण्योपपत्तिः तादृशलघुधर्म्मावच्छिन्नेशक्तिशङ्कितातत्र द्रव्यत्वव्यापकधर्म्मावच्छिन्नेरूपवद्भेदबोधस्यस्वीकरणीयतयातादृशवाक्यस्याप्रामाण्यापत्तेः । तथाहि । द्रव्यन्नरूपवदित्यादिवाक्यस्यप्रामाण्यवारणायअनुयोगिता वच्छेदकावच्छेदेननञोऽभावबोधकत्वव्युत्पत्तेःस्वीकरणीयतया द्रव्यत्वसत्तादेरपिद्रव्यत्वव्यापकतयातद्वच्छेदेनरूपवद्भेदासत्त्वात्तादृशवाक्यस्यप्रामाण्यापत्तिर्दुर्व्वारा अस्माकन्तुद्रव्यत्वव्यापकपर्य्याप्तिकयावत्त्वरूपव्यासज्यवृत्तिधर्म्मसामानाधिकरण्येन रूपवद्भेदबोधकतयातादृश वाक्यस्यप्रामाण्योपपत्तिः । नचनानुयोगितावच्छेदकावच्छेदेनबोधकत्वव्युत्पत्तिभङ्गइतिवाच्यम् । व्यासज्यवृत्तिधर्म्मंमा

अत्रोच्यते । उद्देश्यतावच्छेदकव्यापकविधेयव्याप्य-
पर्याप्तिकोधर्मः प्रवृत्तिनिमित्तं, सर्वंघटारूपवन्तइत्या-
दौतथाविधधर्मो घटनिष्ठयावत्वमेव तस्यव्यासज्य-
वृत्तितयातत्पर्याप्ते घटत्वव्यापकत्वात् रूपादिव्याप्य-
त्वात्, शब्दादृघटत्वा दिव्यापकेरूपादिव्याप्यत्वलाभे
तयोरपि व्याप्यव्यापकभावोर्थाल्लभ्यतेद्रव्यत्वादिव्याप-
कपर्याप्ते रूपाद्यव्याप्यत्वात्सर्वाणिद्रव्याणि रूपव-
न्तीत्यादावयोग्यता । उद्देश्यतावच्छेदकव्यापकत्वंच
तत्समानाधिकरणान्योन्याभाव प्रतियोगितानवच्छे-
दकत्वंतेनरूपादिव्याप्यपर्याप्ते द्रव्यनिष्ठान्यन्ताभावप्र-
तियोगितानवच्छेदकधर्मवत्त्वेपिनक्षतिः । घ टत्व
व्यापकयावत्वपर्याप्तिस्तुन घटादिव्यक्तिभेदाद्भिद्यते-
तोनघटत्वादि व्यापकतायाअनुपपत्तिः । विधेय-

वृत्तिधर्मावच्छिन्नाविशेषितानु योगिवाचकसमभिव्याहृतन-
ञएवतथाव्युत्पत्तिस्वीकारादितिइत्थंचात्रद्रव्यत्वादिव्याप्ते घटा-
दिप्रकारकाधिकरणे विभिन्नतयातत्तत्पर्य्याप्ते नंद्रव्यत्वव्यापक-
त्वम् तद्व्यवृत्तियावत्वपर्याप्ते स्वाधिकरणभेदेनाभिन्नतयाद्र
व्यत्वसमानाधिकरणभेदे प्रतियोगितानवच्छेदकत्वरूपव्यापक
त्वस्यतत्रात्ततत्वमितिदिक्एवं विधेयवाचकपदसमानाभिकरण
सर्व्वंपदस्यविधेयतावच्छेदक धर्म्मव्यापकधर्म्मावच्छिन्नेशक्तिक
ल्पनेघटेनसर्व्वाणिरूपाणि इत्यादिवाक्यस्यायोग्यत्वापत्तिस्त-
त्ररूपत्वव्यापकधर्म्मावच्छिन्नाभाव बोधस्यैवस्वीकरणीयतया-
रूपत्वादिव्यापकत्वस्यरूपगुण त्वादिसाधारणतयातद्व-

व्याप्यत्वं च व्यभिचारित्वसंबन्धावच्छिन्नप्रतियोगिता-
कतत्तद्विधेयतावच्छेदकावच्छिन्नप्रतियोगिताकतत्त-
द्विधेयाभाववत्त्वम् अतोविधेयतावच्छेदकावच्छिन्नस्य
यत्र केवलान्वयितातत्रनाप्रसिद्धिः व्यधिकरणसंबन्धाव-
च्छिन्नप्रतियोगिताकस्यैव तथाविधाभावस्यप्रसिद्धत्वात् ।
अत्र चोद्देश्यतावच्छेदक विधेयतावच्छेदकघटत्वरूप-
त्वादीनामुपलक्ष णतयानुगमकं ताद्दशावच्छेदकत्व-
मेव अतोनशक्त्या नन्त्यं नवापूर्वधर्मव्यापकत्वादिभाना
नुपपत्तिः । नवाताद्दशावच्छेदकत्वभानापत्तिः । यद्य-
पिसामान्यतउद्देश्यतावच्छेदकत्वमनवावर्तकमेव, उ-
द्देश्यतावच्छेदक विधयास्वसमभिव्याहृतपदप्रति-
पाद्यत्वंचेताद्दश पदजन्यशाब्दबोधात्पूर्वं

च्छिन्नाभावस्यघटेऽभावात् रूपत्वव्यापकपर्य्याप्तिकधर्म्मावच्छि
शक्तिस्वीकारेच तावद्रूपवृत्तियावत्त्वादेरेवता द्दशत्वात्तस्य
चव्यासज्यवृत्तितयातदवच्छिन्नाभावस्तत्राचत एवेतिव्यभि-
चारित्वसम्बन्धेन । नचव्यभिचारित्वसम्बन्धस्य वृत्त्यनियाम-
मकत्वात् तत्तत्सम्बन्धावच्छिन्नप्रतियोगिताकाभावस्याप्रसि-
द्धिरितिवाच्यम् । द्दढहेतावुपाधिर्न्नहेतापाधिरिति सर्व्वंज-
नानुभवसिद्धि प्रसिद्ध रीत्यातत्सम्बन्धस्यवृत्तिनियामकत्वादिति
। उद्देश्यतावच्छेदकविधया । उद्देश्यतावच्छेदकतया, तृतीय-
योऽभेदः स्वसमभिव्याहृतप्रतिपाद्यत्वम् । स्वघटितानुपूर्व्वी-
घटकपदजन्य प्रतीतिविषयत्वं, तथा चउद्देश्यतावच्छेदक-
त्वाभिन्नस्वसभिव्याहृतपदप्रतिपाद्यत्वमित्यर्थः।

दुर्घटं तथापि ताद्दशप्रतिपाद्यत्वेन वक्तृबुद्धेर्वक्तृतात्पर्य-
स्यवाविषयत्वं तथावाच्यम् । तच्चप्रकरणादिनापूर्वमपि
सुग्रहम्, स्वत्वाननुगमः पूर्ववत्समाधेयः ।

दुर्घटम् । ननिश्चयविषयीभूतम् । ताद्दशपदप्रतिपाद्यत्वेन, स्व-
समभिव्याहृतपदजन्यप्रतीतिविषत्वेन । उद्देश्यतावच्छेदक-
विधया इत्यनुषज्जते। वक्तृबुद्धिरित्यस्यविषत्वमित्यर्थः। वक्तृबुद्धिश्च
सर्व्वेघटारूपवन्त इत्यादिवाक्यजन्यबोधीयरूपत्वावच्छिन्नविधे-
यतानिरूपितोद्देश्यतावच्छेदकतावत् घटकत्वमिष्टसाधनमि-
त्याकारिका । वक्तृतात्पर्य्यमपिताद्दशावच्छेदकतावद्घटत्वं
भवत्वित्याकारकमित्यवधेयम् ॥ प्रकरणादिना,प्रथमोपदिष्टत्वा-
दिना। पूर्व्ववत्समाधेय इति । उद्देश्यतावच्छेदकविधयास्व-
समभि व्याहृतपदप्रतिपाद्यत्वेनवक्तृबुद्धिविषत्वाश्रयधर्म्मावच्छि-
न्नव्यापकविधेयतावच्छेदकविधया स्वसमभिव्याहृतपदप्रतिपा-
द्यत्वेन वक्तृबुद्धिविषयत्वा श्रयधर्म्मावच्छिन्नव्यप्यपर्य्याप्तिकध-
र्म्मावच्छिन्नविधेयताकत्व स्वजन्यत्वोभयसंम्बन्धेनवोधः सर्व्वप-
दवान्भवत्वित्या कारकमगवच्छेत: स्वीकार्य्यइतिभावः ॥
इदमपिचस्मदुक्ततत्पदस्यशीर्यादिशा परिष्कार्य्यइति । उद्दे-
श्यतावच्छेदकव्यापकत्वञ्च व्यापकता उद्देश्यतावच्छेदकता
घटकसम्बन्धेनान्यथासर्व्वाणिद्रव्याणिरूपवन्तिइत्यादिप्रयोगा-
पत्तेः । घटगयावत्त्वस्यघटानुयोगिकसमवायेनद्रव्यत्वव्यापका
त्वात् एवंविधेयताव्याप्यत्वमपिविधेयतावच्छेदकताघटकस
म्बन्धेनविधेयाभावघटितंतेन सर्व्वाणिजन्यद्रव्याणिघटत्ववन्ति
इत्यादिकोनप्रयोगः अन्यथाजन्य द्रव्यत्वव्यापकयावत्त्वस्यका-
लिकेनघटाभाववद्वृत्तित्वात्ता द्दशप्रयोगवार-

उद्दे श्यविधेयभावस्य न विशेष्यविशेषणाभावनियतोऽतः सर्वेषु घटेषु रूपमित्यादावपि घटत्वादिरूपत्वाद्योरुद्दे-श्यविधेयतावच्छेदकभावोऽस्त्येवेति न घटत्वादिव्या-पकरूपत्वाद्यवच्छिन्नव्याप्यपर्याप्तिकयावत्त्वभानानुप-पत्तिः। इयं च व्युत्पत्तिरुद्दे श्यवाचकपदसमानाधिक-रणसर्वपदे। विधेयवाचकपदसमानाधिकरणसर्व-पदस्य विधेयतावच्छेदकव्यापकोद्देश्यतावच्छेदकाव-च्छिन्नसम्बन्धव्याप्यपर्याप्तिकयावत्त्वमर्थः। अतः काले सर्वं वृत्तिमन्तः कालः सर्वधर्मवानित्यादौ सर्वपदेन वृत्ति मत्त्वादिव्यापककालादि सम्बन्धव्याप्यपर्याप्तिकयाव-त्त्वं प्रतीयते। अथवा स्वार्थान्वयितावच्छेदकधर्मव्याप-क तादृशधर्मावच्छिन्नान्वयितावच्छेदकावच्छिन्नव्या-प्यपर्याप्तिकधर्मावच्छिन्नं सर्वपदार्थ इत्युद्देश्यविधेयभा-वं विशिष्यानिवेश्य सर्वसाधारण्यैकाव्युत्पत्तिरेव स्वी क्रियते। अन्वयित्वं च विशेष्यविशेषणभावसाधारण। म्। सर्वं प्रमेयमित्यादौ वस्त्वादिपदाध्याहारमन्तरेणाबोधो-

णासम्भवादिति केचित्। तन्न। सर्व्वेषु द्रव्येषु रूपमित्यादौ विशेषा-ताख्यविधेयतावच्छेदकसम्बन्धाप्रसिद्ध्या तदनुपपत्तेः। एवं वि-धेयवाचकपदसमानाधिकरणसर्व्वपदस्थले उभयसाधारणान्वयता-नुगमस्थले चानुपपत्तिर्बोध्या। एवमन्यत्रापि केषांचिदाशङ्कितं तत्तु च्छतया नाशङ्कितं तस्माद्वक्ष्यमाणमस्मदुक्तसमाधानमे-वावलम्बनीयमिति। विशेष्यविशेषण साधारणमिति। विषयता निरूपितविषयतारूपम्।

पगमेतदनुरोधिनान्योन्याभावप्रतियोगितानवच्छेद-
कविधेयव्याप्य पर्य्याप्तिकयावत्त्वार्थं कतापि सर्वपदस्य-
स्वीकार्या, अयं सर्वघटं वेत्तीत्यादौ वेतदीयज्ञानविषय-
तात्वादिनाविषयत्वानन्वया त्ताद्दशधर्मेणान्वयिता-
वच्छेदकः । अन्वयितावच्छेदकविषयतात्वावच्छि-
न्न व्याप्यत्वमतिप्रसक्तमिति तत्रापि व्युत्पत्त्यन्तरं स्वय-
मूहनीयम् । अत्र न सर्वाणि द्रव्याणीत्यादौ नञर्थप्रति-
योगिविशेषणार्थकसर्वशब्दस्य स्वार्थान्वयितावच्छेदकरू-
पत्वादिव्यापकपर्य्याप्तिनिरूपकयावत्त्वार्थकतया तदव-
च्छिन्नाभाव एव प्रतीयते व्यासज्यवृत्तिधर्मावच्छिन्नप्रति-
योगिताकताद्दशाभावो घटादावबाधित एवेति नायो-
ग्यता । न च व्यासज्यवृत्ति गुणत्वादिपर्य्याप्तेरपि रूप-
त्वादिव्यापकतया गुणत्वादिमाधारणरूपत्वादिव्याप-
कपर्य्याप्तिकधर्मावच्छिन्नाभावो न घटादाविति कथम-

---

अन्योन्याभावप्रतियोगितानवच्छेदकेइति । सर्व्वं घटइत्या-
दिप्रयोगवारणाय ताद्दश पर्य्याप्तौ विधेयव्याप्यत्वं निवेशनीयमेवं-
सर्व्वं वेत्ति विषयीत्याद्यनुरोधात् अन्योन्याभावप्रतियोगितानव-
च्छेदक स्वार्थानुयोगितावच्छेदकधर्मव्याप्यधर्मावच्छिन्नव्याप्य-
पर्य्याप्तिकधर्म्मावच्छिन्नेपि सर्व्वपदस्य शक्त्यन्तरमङ्गीकरणीयम् ।
अतस्तत्रान्योन्याभावप्रतियोगितावच्छेदकविषयितात्वव्याप्यप-
र्य्याप्तिकधर्म्मावच्छिन्नस्य सर्व्वपदाद्बोधः । स्वयमूहनीयमिति ।
द्वितीयार्थककर्मतायामाधेयता सम्बन्धेन घटस्यान्वये घटत्वास्या-
पि आश्रयपर्य्याप्तिमद्वृत्तित्वसम्बन्धेन भानोपगमात् नानुपपत्तिः ।
स्वाश्रयत्वस्वव्यापकत्वस्वसमानकालीनैतदीयज्ञानविषयता
त्वावच्छिन्नव्याप्यत्वोभयसम्बन्धेन ग्राह्यं, सर्व्वपदात्ताद्दशान्व-
यतात्पर्य्येणाह । कथमिति । केचित्तु

त्वयोग्यतेतिवाच्यम् । अव्यासज्यवृत्तिगुणत्वादेरेकैक-
मात्रवृत्तिधर्मावच्छिन्नपर्याप्तिकूटस्यै वसर्वाणिरूपाणि
गुणाइतिप्रतीत्यावगाहनात्सर्वं साधारणैकधर्मपर्याप्तौ
मानाभावात्प्रत्येकधर्मावच्छिन्नपर्याप्तिषुरूपत्वादेर्नि-
रुक्ताव्यापकत्वाभावात्सर्वंद्रव्यंनरूपवदित्यादौद्रव्यत्वा-
दिव्यापकयावत्त्वसामाना धिकरण्यमभावस्यप्रतीयते
ऽतोनायोग्यता । अनुयोगिविशेषणावच्छेदेनैवनञा
रूपाभावःप्रत्याय्यतेद्रव्यंनरूपवदित्यादिप्रयोगादर्शना-
दितिकथमेतदुपपाद्यतामितिनाशङ्कनीयम् व्यासज्य-
वृत्तिधर्माविशेषितावच्छिन्नानुयोगिताकाभावबोधित-
थानियमोपगमात् यत्तुस्वरूपसंबन्धात्मकमभावानुयो-
गितावच्छेदकत्वमनुयोगिविशेषणंनञ्पदजन्याभावप्र-
तीत्यागृह्यतेद्रव्यत्वादौनतादृशरूपवद्भेदानुयोगिताव-
च्छेदकत्वमतोद्रव्यंनरूपव। दित्यादयोनप्रयोगाः,व्यास-
ज्यवृत्तिधर्मा वच्छिन्नानुयोगकाभावाभ्युपगमेनसर्वंद्र-
व्यंनरूपवदित्यादिप्रयोगाउपपादनीयाः । नचव्यास-
ज्यवृत्तिधर्मावच्छिन्नानुयोगिताकाभावोपगमेकस्यापि-
रूपादेः सर्वंघटादिषुपर्याप्तिर्नास्तीति

---

स्वार्थान्वयितावच्छेदकधर्म्मव्यापकतदवच्छिन्नान्वयिताव-
च्छेदकधर्म्मव्याप्यधर्म्मावच्छिन्न व्याप्यपर्य्याप्तिकधर्म्मावच्छिन्ने-
पिसर्व्वपदस्यशक्त्यन्तरकल्पनीयमतोनानुपपत्तिः । तादृशध-
र्म्मस्यैतदीयज्ञानविषयतात्वमेवेतिविशेषणान न्तरंव्यासज्यवृ-
त्तिधर्म्मावच्छिन्नत्वरूपप्रकारतावच्छेदकविशेषणताविशेषसम्ब-
न्धविशेषणम्

सर्वघटत्वावच्छिन्ने पिरूपादिमद्भेदसत्त्वे नसर्वेघटान
रूप वन्तइत्यादिप्रयोगापत्तिरितिवाच्यं, रूपादिपर्या-
प्तित्वेनानुगतपर्याप्तीनामनतिप्रशक्तत्वे नघटादिनिष्ठ-
यावत्त्वादिनाप्यनवच्छेदात्तदवच्छे देनरूपादिमद्भेदवृ-
त्तौविरोधात् । द्रव्यत्वादिव्यापकयाव त्त्वस्यचाति-
प्रसक्ततयारूपादि पर्याप्तित्वावच्छिन्नानामनवच्छे द-
कतयातदवच्छे देन रूपादिमद्भेदवृत्तावविरोधादिति,
तदसत्, उक्तरीत्यैवोपपत्तौ प्रतियोगितावच्छेदकादि-
मतितच्छून्यसाधारणव्यासज्यवृत्तिधर्मावच्छेदेनान्यो
न्याभावादि वृत्तौमानाभावात्तादृशाभावोपगमेप्रति-
बन्धकसमवहितेपिदेशैव्या सज्यवृत्तिधर्मावच्छिन्नानु-
योगिताकप्रतिबन्ध काभावबलात्कार्यापत्तेःतत्रका-
रणतावच्छेदककोटौविशेषणान्तरं प्रक्षिप्यापत्तिवार-
णेतुगौरवात् । अथसर्वंद्रव्यंनरूपवदित्यादौद्रव्यत्वादि-
व्यापकपर्याप्तौविधेयीभूतरूपवद्भेदव्याप्यत्वस्यबाधित-
त्वाद्योग्यत्वंदुर्वारमेवेतिचेन्न। तत्रविधेयव्याप्यत्वभा-
नानुपगमात्खण्डशोविभिन्नशक्त्युपगमेनकश्चित्तदं-
शपरित्यागेन बोधेविरोधविरहात् ।

---

खण्डशोभिन्नशक्त्युपगमेनेति । अथखण्डशोभिन्नशक्तिःकीदृशौ
यदिस्वार्थान्वयितावच्छेदकत्वव्या पकपर्य्याप्तिकधर्म्मावच्छिन्न-
विधेयकस्वार्थान्वयितावच्छेदकधर्म्मव्याप्यपर्य्याप्तिकधर्म्मावच्छि-
न्नविषयताकबोधंजनयतुसर्व्वं पदमित्येवंभगवच्छङ्के तरूपात-
दातादृशोभयविषयकशाब्दबोधस्यैकशङ्के तविषयतयाकथमेकंप-
रित्यज्यान्यस्यबोधः।यदिचनानार्थंतत्प्रत्येकधर्म्मावच्छिन्नेशक्तिस्त-
दासकृदुच्चरितसर्व्वंपदात्सति तात्पर्य्ये युगपन्नानार्थभानंसम्भवे-

पिसति च एकमात्रतात्पर्य्ये तन्मात्रमानसम्भवेपिसर्व्वे घटारू-
पवन्त इतिवत् सर्व्वाणि द्रव्याणि रूपवन्ति इत्यादिप्रयोगापत्तिः, द्र-
व्येप्रत्येकमनुपस्थाप्यस्य द्रव्यत्वव्यापकपर्य्याप्तिकधर्मावच्छिन्नस्य
रूपव्याप्यपर्य्याप्तिकधर्मावच्छिन्नस्याभेदेन विशेषणतयान्वयबाध-
काभावात्। एवंव्याप्यादिघटकसम्बन्धादुर्निर्वचतया पूर्वोक्ता-
नुपपत्तिश्च। नैवमुक्तार्थान्वयितावच्छेदकावच्छिन्नान्योन्याभा-
वप्रतियोगितावच्छेदकाभवपर्य्याप्तिकधर्मावच्छिन्नान्योन्या-
भावप्रतियोगितावच्छेदकावच्छिन्नेषु घटेष्वेकाशक्तिः, अपराच
स्वार्थान्वयितावच्छेदकावच्छिन्नान्वयितावच्छेदकावच्छिन्नाभा-
वपर्य्याप्तिकधर्मावच्छिन्नेषु चतुर्षु इत्येव खण्डशोविभिन्नश-
क्तिरित्यस्य तात्पर्य्यम्। अतएव विभिन्नशक्त्युपगमेनेत्येवतावन्मा-
त्रं परिहाय खण्डशइत्युक्तम्। अभावरसङ्केतश्चसर्वपदं स्वार्थान्व-
यितावच्छेदकावच्छिन्नविषयकान्योन्याभावप्रतियोगितावच्छे-
दकत्वविषयकभावविषयकपर्य्याप्तिकधर्मावच्छिन्नविषयकान्यो-
न्याभावप्रतियोगितात्वावच्छेदकावच्छिन्न विषयकबोधंजन-
यत्वित्याकारकः अपरश्चसर्वपदं तादृशैकतरधर्मावच्छिन्नविष-
यकबोधंजनयत्वित्याकारकस्य, एवं सर्वे घटारूपवन्त इत्यादौ स्वा-
र्थान्वयितावच्छेदकावच्छिन्नस्य घटस्यापरसर्वपदार्थान्योन्या-
भावप्रतियोगितावच्छेदकत्वे कदेशे अन्योन्याभावेचाधेयतया-
न्वयात् घटनिष्ठान्योन्याभावप्रतियोगितावच्छेदकत्वलाभः। त-
स्य च प्रतियोगितयाऽपरपदार्थे भावेन्वयात्तादृशावच्छेदकत्वा-
भावलाभः। उभयशक्ति प्रतिपाद्यपर्य्याप्तिकधर्मावच्छिन्नयो-
र्मिलित्वाएक एवबोधः, संभेदेनान्यतरवैयर्थ्याभावात्। एवं च
तादृशप्रतियोगितावच्छेदकत्वाभावरूपाभावयोः पर्य्याप्तताव-

न्वयः पर्य्याप्तिस्वप्रतियोगितासम्बन्धेनधर्म्मावच्छिन्नरूपत्वा-
भावपदार्थैकदेशेधर्म्मेऽन्वयात् घटनिष्ठान्योन्याभाव प्रतियोगि-
तावच्छिन्नलाभः। एवंचघटनिष्ठान्योन्याभाव प्रतियोगितान
वच्छेदकरूपाभाववत्पर्य्याप्तिकप्रतियोगिकधर्म्मावच्छिन्नला-
भः। एवंघटस्यान्योन्याभावप्रतियोगितावच्छिन्नापरपदार्थैक-
देशेऽन्योन्याभावेऽधाधेयतया अन्वयात् घटनिष्ठान्योन्याभावप्र-
तियोगित्वावच्छिन्नलाभः। एवंचघटनिष्ठान्योन्याभावप्रति-
योगितानवच्छेदकरूपाभावत् पर्य्याप्तिकधर्म्म घटनिष्ठान्यो-
न्याभावप्रतियोगित्ववदभिन्नोघटोरूपवानित्यकारकस्तत्रबो-
धः आकाङ्क्षाकार्य्यतावच्छेदकतयातादृशविषयताशाल्येव
बोधस्तादृशस्थले नतुकदाचिदपिविधेयव्याप्यत्वं परित्यज्य।
एवं च सर्वद्रव्यंनरूपवदित्यादौ आकाङ्क्षावैचित्र्यात् विधे-
यव्याप्यत्वंपरित्यज्यापिबोधोनिष्प्रत्यूहएवेति। एवंकालेसर्व्वै
वृत्तिमन्तः कालः सर्व्वधर्म्मवान् इत्यादौ स्वार्थान्वयितावच्-
छेदकधर्म्मावच्छिन्नान्वयितावच्छेदकावच्छिन्नस्यकाल-
स्य आकाङ्क्षावैचित्र्यात् कालिकसम्बन्धावच्छिन्नाधेयत्व-
सम्बन्धावच्छिन्न प्रतियोगिताकत्वसम्बन्धेनैवविशेषणात्वं
तादृशतादृशसम्बन्धभानस्य आकाङ्क्षाया एवनियामकत्वात्
इतिचतुरस्रम्। अथस्वार्थान्वयितावच्छेदकधर्म्मावच्छिन्ना-
नु योगितावच्छेदकतावच्छिन्नव्याप्यपर्य्याप्तिक धर्म्मावच्-
छिन्नस्य केवलस्यकदाचिदप्यभानात् पर्य्याप्तिकधर्मावच्-
छिन्ने द्वितीयशक्तिंप्रकल्प्यसंभेदेनान्यतरवैयर्थ्यमित्यायुक्ति-
रनुचितेतिचेन्न। कल्प्याएतत्त्वशक्तिः स्वार्थान्वयिनवच्छे-
दकावच्छिन्नाभावयोरेवद्वितीयशक्तिस्वीकरणायेति। न

सर्वं गगनमित्यादिप्रयोगाभावाद्यावत्त्वदनेकत्वमपि सर्वपदार्थः । तच्च स्वार्थाभेदान्वयोद्देश्यतावच्छेदकसमानाधिकरणभेदप्रतियोगित्वमेव । भेदश्च सामानाधिकरण्यनिरूपकत्वोभयसम्बन्धेन प्रतियोगिताविशिष्टान्योन्याभावः । अतो न द्वित्वावच्छिन्नभेदमादायातिप्रसंगः। एतादृशोभयधर्मावच्छिन्ने शक्तिरेकैवातोनैकंधर्मं परित्यज्यापरमादायबोधः कदाचिदपीतिनकतिपयानेकतात्पर्येणाशेषैकतात्पर्येण वा सर्वशब्दः प्रयुज्यते । चैत्रोदधिभुङ्क्ते मैत्रः पयोभुङ्क्ते देवदत्तो घृतं भुङ्क्ते विष्णुमित्रः सर्वमेवेत्यादौ सर्वपदेन प्रत्येकं दधिपयोघृतानां भोजनकर्मतया प्रतिपादनाद्यद्रूपावच्छिन्ने पदान्तरोपस्थाप्यार्थे स्वार्थान्वयस्तद्रूपावच्छिन्नान्विततया यावद्धर्मावच्छिन्ना उपक्रान्ताः प्रत्येकं तावद्धर्मावच्छिन्नेषु सर्वपद-

---

चस्वार्था न्वयितावच्छेदकधर्म्मव्याप्यपर्य्याप्तिकधर्म्म स्वार्थान्वयितावच्छेदकधर्म्मवन्निष्ठान्योन्याभाव प्रतियोगित्वोभयधर्म्मावच्छिन्न एव शक्तिः स्वीक्रीयताम्, द्वितीयशक्तिप्रतिपाद्यविधेयाद्यभावस्य तादृशशक्यतावच्छेदककोटि प्रविष्टपर्य्याप्तावन्वयस्वीकारेणैवोपपत्तेरिति वाच्यम्। शक्यतावच्छेदकेतदन्वयेव्युत्पत्तिविरोधापत्तेः । यदि च व्युत्पत्तिवैचित्र्यात् परमसुन्दर इत्यादिवत् तादृशान्वयबोधः स्वीक्रीयते तदा तादृशोभयधर्म्मावच्छिन्न एव तादृशशक्तिस्वीकार्य्या । अतएव तादृशोभयधर्म्मावच्छिन्ने शक्तिरेकैवेति ग्रन्थस्यापि संगतिरितिबोध्यम् । तद्रूपावच्छिन्नान्विततया। तद्रूपावच्छिन्नविषयतानिरूपितविषतया । भेदेऽन्वितया। उपक्रान्ता । पूर्व्वं शाब्दबोधविषयीभूता।

स्यशक्त्यन्तरमङ्गीकार्य्यम्। उपक्रान्तैकधर्मावच्छिन्नान्व
ययोग्यता। विरहे वाक्यस्याप्रामाण्या तादृशस्थले तथा-
विधसकलधर्म्माणामेवान्वयितावच्छेदकतया भानानि-
यमः तन्निर्वाहिका च तथाविधयावद्धर्मप्रकारकबोधंज-
नयतु सर्वपदमित्याकारकसंकेतरूपा विलक्षणशक्तिरेव
तादृशशक्तिज्ञानेनैकधर्मप्रकारकबोधजनने परधर्मप्र-
कारकबोधसामग्र्याः पुष्पवन्तपदशक्तिज्ञानेन चन्द्रत्व-
सूर्यत्वयोरेकतरप्रकारबोध जननेपरबोधसामग्र्या इव
प्रयोजकत्वोपगमात्। नच प्रक्रान्तानां दध्यादीनां प्रत्ये-
कमन्वये वाक्यभेदापत्त्या साहित्यप्रकारेण तावत्पदार्थ-
वाचकत्वमेव सर्वपदस्याङ्गीनोपेयतइतिवाच्यम्। साहि
त्यविशिष्टान्वयस्य समभिव्याहृतपदार्थे यत्र बाधस्तत्रा-

---

बस्यात्तृतीयाभेदान्वयः। प्रत्येकतद्रूपावच्छिन्नेषु। दधित्वपयस्त्व-
घृतत्वाद्यवच्छिन्नेषु। यावद्धर्म्मावच्छिन्नेत्यादि उपक्रान्तादृत्यन्तं
प्रथमतः शक्तिग्राहकतया परस्य शक्तिस्मारकतयाभिहितं नतु शक्य-
तावच्छेदकघटकत्व प्रदर्शनपरं शक्तिस्तु प्रत्येकधर्म्मावच्छिन्न एवे-
त्यवधेयम्। साहित्यं धीविशेषविषयत्वं मीमांसकमतेऽतिरिक्त-
पदार्थः द्वित्वादिवत् व्यासज्यवृत्ति। बाधइति। दध्यादिकर्म्मत्वा
नां विभिन्नतया कस्मिन्नपि दध्यादियावत्पदार्थ स्यासत्त्वादन्वयबा-
धइतिभावः। यद्यपिकर्म्मत्वानां विभिन्नत्वेपिकर्म्मतात्वाव-
च्छिन्ने स्वीयस्वीयकर्म्मत्वे स्वस्वप्रकारकशाब्दबोधस्य खलेकपोत
न्यायेन सम्भवात् वाक्यभेदस्वीकारोनुचितः। तत्तद्विशेष्यताया
भिन्नत्वेपिकर्म्मतात्वनिष्ठावच्छेदकताया ऐक्यात् एकवाक्यत्वा-

पितथाप्रयोगात् वाक्यभेदस्यच गत्यन्तरविरहेणेष्टत्वात्। अतएवप्रत्यं कांपुत्रपश्वादिरूपफलकामकर्तृव्यतयाक्रतूनभिधायाभिहितेनसर्वेभ्योदर्शपूर्णमासावित्यनेनमिलितानांतावत्फलानांदर्शपूर्णमासकर्तृव्यताप्रयोजककामनाविषयत्वंप्रतिपाद्यते प्रक्रान्तवाचिनासर्वनामपदेनमिलितफलानुपस्थापनात् अपितुप्रत्यंकमेवेतिप्रत्यंकफलकामस्यैवतत्राधिकारइतियोगसिद्ध्यधिकरणसिद्धान्तोपिसंगच्छते ॥ किंपदस्यजिज्ञासितेशक्तिः। अतएवस्वीयजिज्ञासाज्ञापनायकिंपदघटितप्रश्नवाक्यंप्रयुज्यते। तत्रोद्देश्यवाचककिंपदस्यसमभिव्याहृतपदोपस्थाप्यतावच्छेदकधर्मावच्छिन्नविधेयतानिरूपितोद्देश्यतावच्छेदकत्वेनवक्तृजिज्ञासितोधर्मःप्रवृत्तिनिमित्तम् उपस्थाप्यतावच्छेदकान्तमुपलक्षणतयानुगमकंशाब्दबोधेतद्भानात्। एवंचकःपचतीत्यादितःपाकक्रतित्वावच्छिन्नविधेयतानिरूपितोद्देश्यातावच्छेदकत्वेनवक्तृजिज्ञासितोयोधर्मस्तद्वान्पचतीत्याकारकोऽन्वयबोधःकिञ्चिद्धर्मावच्छिन्नोद्देश्यकपाककर्तृत्वविधेयकंज्ञानंभवत्वित्याकारकजि-

संभवात्। अतएवभवखदिरपलाशान्छिन्धीत्यादावेतादृशरीत्याशाब्दबोधः स्वयमेवोक्तः। अत्रैकवाक्यत्वाभावेसमासानुपपत्तिरपिस्वयमेवोक्ता,सर्व्वेभ्योदर्शपौर्णमासावित्यादावपिएतादृशरीत्याशाब्दबोधसम्भवान्नवाक्यभेदप्रसक्तिः तथापिसर्व्वपदस्य साहित्यविशिष्टवाचकतामात्रखण्डनायापत्तेस्तत्रवाक्यभेदस्वीकारइत्यवधेयम्। यज्ञांविधायइति। यज्ञः प्रधानयागः। क्वचित् क्रतूनभिधायेतिपाठः।

ज्ञासायास्तादृशबोधविषयकतया तादृशेच्छाविषयी
भूतज्ञानजनकाद्ब्राह्मणः पचतीत्युत्तरवाक्यान्निवृत्ति-
रितितादृशप्रश्नानन्तरं तथैवोत्तरं प्रयुज्यते । नचैवं
प्रमेयः पचतीतित्याद्युत्तरवाक्यमेव कथंनतादृश-
प्रश्नानन्तरंप्रयुज्यते, तज्जन्यज्ञानस्यापितादृशेच्छा
विषयत्वादितिवाच्यम् । जिज्ञासाविषयीभूत*विधे-
यन्यूनवृत्तिधर्मावच्छिन्न एवतादृशकिंपदशक्त्यभ्युपग-
मात् अभेदेनस्वार्थान्वितोद्देश्यवाचकपदान्तरसम
भिव्याहृतकिंपदशक्यताव च्छेदकगर्भे चस्वार्थाभेदान्व-
यितावच्छेदकत्वोपलक्षितधर्मन्यूनवृत्तित्वमपिधर्मां-
शेविशेषणंदेयमतः कोब्राह्मणः पचतीत्यादिप्रश्नानन्त

विधेयन्यूनेति । स्वसमभिव्याहृतपदोपस्थाप्यता वच्छेदकोपल
क्षितधर्मावच्छिन्नन्यूनवृत्तिरित्यर्थः । तेनविधेयत्वस्यकेवलान्वयि
त्वान्नदोषइति । तादृशकिंपदेति । उद्देश्यवाचककिंपदेत्यर्थः । तथाच
पाककृतित्वावच्छिन्नविधेयतानिरूपितोद्देश्यतावच्छेदकत्वेनजि-
ज्ञासाविषयककृतिन्यूनवृत्तिधर्मवान्पचतीत्याकारकएवकः प-
चतीत्यादितोबोधइति । विशेषणन्देयमिति । तथाचस्वसमभि
व्याहृतपदोपस्थाप्यतावच्छेदकधर्मावच्छिन्नविधेयतानिरूपि-
तार्थाभेदान्वयितावच्छेदकत्वोपलक्षितधर्मावच्छिन्नायाउद्देश्य
तातन्निरूपिताभेद संसर्गावच्छिन्नावच्छेदकताकत्वेनजिज्ञासा-
विषयस्वार्थाभेदान्वयि तावच्छेदकत्वोपलक्षितधर्मन्यूनवृत्ति
धर्मावच्छिन्ने तादृशकिंपदस्यशक्तिः । एवंचकोब्राह्मणः पचती-
त्यादितः स्वसमभिव्याहृतपदोपस्थाप्यतावच्छेदकत्वोपलक्षित
धर्मावच्छिन्नविधेयतानिरूपितब्राह्मणत्वावच्छिन्नोद्देश्यतावच्छे
दकत्वेनजिज्ञासाविषयब्राह्मणत्वन्यूनवृत्तिधर्मवदभिन्नो ब्राह्म-

* स्वसमभिव्याहृतपदोपस्थाप्येति पाठान्तरम् ।

रंचैत्रः पचतीत्याद्याकारकोत्तरवाक्यं प्रयुज्यते नतु मनुष्यः पचतीत्याकारकं मनुष्यत्वादेर्ब्राह्मणत्वाद्यन्यूनवृत्तित्वात्तदवच्छिन्नोद्देश्यत्वेन ज्ञानगोचरेच्छाया स्तस्या प्रतीतेः । एवं यत्रोद्देश्यतावच्छेदके किं पदार्थस्याभेदेनान्वयस्तत्र तदन्वयितावच्छेदकधर्मावच्छिन्न विशेषणतापन्न तदन्वयितावच्छेदकधर्मन्यूनवृत्तिधर्मावच्छिन्नोद्देश्यतावच्छेदकताकप्रकृतविधेयगोचरेच्छा किंपदेन बोध्यते । एवंच प्रकृतसत्तानिष्ठविधेयतानिरूपितघटवृत्त्युद्देश्यतावच्छेदकतानिरूपितसंख्यात्वन्यून वृत्तिधर्मनिष्ठावच्छेदकत्वेन जिज्ञासितो योधर्मस्तद्वान् किंपदार्थः । अतः कतिघटाः सन्तीत्यादौ डतिप्रत्ययार्थे संख्यादौ किंपदार्थस्य जिज्ञासितधर्मावच्छिन्नस्याभेदेनान्वयात्संख्यात्वन्यून वृत्तिदशत्वत्वावच्छिन्नोद्देश्यतावच्छेदकताक बोधजनकदशसंख्याका घटाः सन्तीत्युत्तरं तत्र प्रयुज्यते । यत्रोद्देश्यतावच्-

---

त्रः पचतिइत्याकारकोबोधः । चैत्रइत्यनन्तरं ब्राह्मण इत्यध्याहार्यमतो जिज्ञासाविषयबोधलाभः । तदवच्छिन्नोद्देश्यतावच्छेदकत्वेन । मनुष्यत्वावच्छिन्नोद्देश्यतावच्छेदकताकत्वेनेत्यर्थः । तदन्वयितावच्छेदकेति । किंपदार्थान्वयितावच्छेदकेत्यर्थः । दशसंख्यका घटाः सन्तीत्युत्तरं तत्रप्रयुज्यते इति । तादृशकिंपदशक्तिस्तु स्वसमभिव्याहृतपदोपस्थाप्यतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नविषयतानिरूपितस्वार्थाभेदान्वयितावच्छेदकधर्मावच्छिन्नान्वयितावच्छेदकत्वोपलक्षितधर्मावच्छिन्नोद्देश्यतावच्छेदकतानिरूपिताभेदसंसर्गावच्छिन्नावच्छेदकताक-

च्छेकीभूतविभक्त्याद्यर्थे भेदेनकिंपदार्थान्वयःकस्यपुत्रः
सुन्दरइत्यादौतत्रयादृश सम्बन्धेनयदवच्छिन्नेतदन्व-
यस्तत्रताद्दशसम्बन्धेनविशेषधर्मा वच्छिन्नविशेषितत्तद-

त्वेनजिज्ञासितस्तथाभेदान्वयितावच्छेदकत्वोपलक्षितधर्मान्यू
नवृत्तिधर्मावच्छिन्ने। अतः कतिघटाः सन्तीत्यादौ अस्तित्वा-
वच्छिन्नविधेयता निरूपितायाघटत्वावच्छिन्नोद्देश्यतातन्निरू-
पिताया संख्यात्वावच्छिन्नावच्छेदकतातन्निरूपिताभेदसंसर्गा
वच्छिन्नावच्छेदकताकत्वेनजिज्ञासितसंख्यात्वन्यूनवृत्तिधर्म्म
वच्छिन्नाभिन्नसंख्यावन्तोघटाः सन्तीत्याकारकएवतत्रबोधइ-
ति। एताद्दशजिज्ञासाविषयज्ञानजनकंदशसंख्याकाघटाःसन्ती
त्युत्तरवाक्यंप्रयुज्यतेदशघटाः सन्तीत्युत्तरवाक्यंयदि प्रयुज्यतेत-
दाद्दशपदस्यदशसंख्यके लक्षणयाताद्दशबोधः अन्यथाजिज्ञासा
विषयबोधासंपत्त्याजिज्ञासानिवृत्तिरेवनस्यादितिबोध्यम्। क-
स्यपुत्रःसुन्दरइत्यादाविति। तदन्वयः। किंपदार्थान्वयः। निषि
धद्वाराजन्यतावान्पुत्रपदार्थः षष्ठार्थश्चजन्यत्वंतत्रनिरूपितत्व-
सम्बन्धेनकिंपदार्थस्यान्वयस्तथा चसौन्दर्य्यावच्छिन्नविधेय-
तानिरूपितापुत्रत्वावच्छिन्नाउद्देश्यतातन्निरूपितायाजन्य-
त्वावच्छिन्नावच्छेदकतातन्निरूपितानिरूपितत्वसम्बन्धाव-
च्छिन्नावच्छेदकता तदवच्छेदकत्वेनजिज्ञासितनिरूपितत्व
सम्बन्ध प्रतियोगित्वन्यूनवृत्तिर्य्योधर्म्मः निरूपितत्वसम्बन्धेन-
तदवच्छिन्न जन्यतावान्पुत्रःसुन्दरइत्यन्वयबोधः। अतस्ता-
द्दशबोधस्यताद्दशन्यून वृत्तिधर्म्मावच्छिन्नोद्देश्यतावच्छेदक-
तावच्छेदकताकप्रकारताविधेयकबोध विषयकेच्छाविषयतयाता
द्दशेच्छानिवर्त्तकं चैत्रस्यपुत्रःसुन्दरइत्याद्युत्तरवाक्यं प्रयुज्यते
शक्तिस्तुपूर्व्ववदूह्या।

वच्छिन्नोद्देश्यतावच्छेदकताकप्रकृतविधेयज्ञानगोचरे
च्छाप्रतीयते ॥ एवंविधेयवाचककिंपदस्य स्वसमभिव्या
हृतपदोपस्थाप्यतावच्छेदक त्वोपलक्षितधर्मावच्छि-
न्नोद्देश्यतानिरूपितविधेयतावच्छेदकतया जिज्ञासि-
तोयोविशेषधर्मस्तदवच्छिन्ने शक्तिरिति अयंकइत्या
दाविदंत्वाद्यवच्छिन्नांशेविधेयतावच्छेदकत्वेनजिज्ञा
सितधर्मवानित्याकारकोन्वयबोधः तेनतादृशयथाजि-
ज्ञासाविषयीभूतज्ञानजनकं च अयंब्राह्मणइत्याद्यु-
त्तरवाक्यंतादृशप्रश्नानन्तरंप्रयुज्यते ॥ एवं यत्रविधेये
विधेयतावच्छेदकेवाकिं पदार्थस्याभेदेनभेदेनवान्वयः

विधेयतावच्छेदकतया जिज्ञासितो यो विशेषधर्म्म इति ।
अत्रायं क इति प्रश्नानन्तरमयं प्रमेय इत्युत्तरवाक्यप्रयोगइष्ट
एवेति ध्येयम् इदं किं द्रव्यमित्यादौ स्वसमभिव्याहृतपदोपस्था-
प्यतावच्छेदकधर्म्मावच्छिन्नोद्देश्यतानिरूपितस्वार्थान्वयिताव-
च्छेदकधर्म्मावच्छिन्नविधेयतानिरूपिताभेदसंसर्गावच्छिन्नावच्छे
दताकत्वेन जिज्ञासितस्वार्थान्वयितावच्छेदकधर्म्मन्यूनवृत्तिध-
र्म्मावच्छिन्ने तत्र किं पदस्य शक्तिः । अतस्तादृशशक्तिज्ञाना-
नन्तरमिदं रत्नं द्रव्यमित्याद्युत्तरवाक्यं प्रयुज्यतेभेदाविधयांशे-
भेदान्वयिकिंपदार्थस्यस्थलमुक्तं विधेयांशेन्वयिकिंपदार्थस्थल-
माह । इदं कस्येति । स्वसमभिव्याहृतपदोपस्थाप्यतावच्छे-
दकधर्म्मावच्छिन्नोद्देश्यतानिरूपितस्वार्थान्वयितावच्छेदकध-
र्म्मावच्छिन्नविधेयतानिरूपित निरूपितत्वसम्बन्धावच्छिन्नाव
च्छेदकतावच्छेद कत्वेनजिज्ञासितनिरूपितत्वप्रतियोगित्वन्यू
नवृतिधर्म्मावच्छिन्नेकिंपदस्यशक्तिः । तथाचेदंत्वावच्छिन्न-
निरूपितस्वत्वत्वावच्छिन्नविधेयतावच्छेदकतावच्छेदकत्वेनजि

इदंकिंद्रव्यं इदंकस्यधनं भवतः पुत्राः कति भवान्क-
स्यपुत्र इत्यादौगौगीतिः पूर्ववदूहनीया । किमिन्दुःकिं
पद्ममित्यादौ चाव्ययकिमोवाशब्दस्यैवबितर्कोर्थः ।
वितर्कश्चात्र प्रयोक्तुः संभावनात्मकं ज्ञानं तदर्थस्य
च विशेष्यतासम्बन्धेन प्रथमान्तपदोपस्थाप्यविशेष्ये

ज्ञासितनिरूपितत्वप्रतियोगित्व न्यूनवृत्तिधर्मावच्छिन्नवत्त्वत्व-
वदिदमित्याकारकस्तत्रबोधः अतस्तत्रस्योक्तमित्यु त्तरवाक्यंप्रयु-
ज्यतेविधेयतावच्छेदकेकिंपदार्थस्या भेदान्वयोभेदाद्युदाहरणां-
स्वयमाह । भवतःपुत्राःकतीति । प्रथमेविधेयतावच्छेदकसंख्या
यांकिंपदार्थस्याभेदेनद्वितीये विधेयतावच्छेदकषष्ठ्यर्थेजन्यत्वेकिं
पदार्थस्यभेदेनान्वयःप्रथमकिंपदस्य शक्तिस्तुसमभिव्याहृतपदो
पस्थाप्यता वच्छेदकत्वोपलक्षितधमार्वच्छिन्नोद्देश्यतानिरूपित-
स्वार्थाभेदान्वयितावच्छेदकत्वोपलक्षित धर्मावच्छिन्नावच्छेद-
कताकविधेयता निरूपित्ताभेद संसर्गगावच्छिन्नावच्छेदकताव-
च्छेदकता कत्वेनजिज्ञासितस्वा र्थाभेदान्वयितावच्छेदकत्वो
पलक्षितधर्म न्यूनवृत्तिधर्मावच्छिन्ना । द्वितीयेतुतादृशधर्माव-
च्छिन्नोद्देश्यतानिरूपित स्वार्थान्वयितावच्छेदकधर्मावच्छिन्ना
न्वयितावच्छेदकत्वेन विवक्षित धर्मावच्छिन्नाविधेयतानिरू-
पितावच्छेदकतावच्छेदकत्वेन जिज्ञासितनिरूपितत्वसम्बन्ध-
प्रतियोगित्वन्यूनवृत्ति धर्मावच्छिन्ना । बोधौऊह्यौ । प्रत्युत्तरे-
अपिऊह्यइतिसंक्षेपः । किमुन्दुरिति । समुदायश्लोकस्तु किमि-
न्दुः किं पद्मं किमु मुकुरबिम्बं किमु मुखं किमब्जं किंमीनौ
किमुमदन बाणौकिमुदृशौ । नगौवागुच्छौवाकनककलशौवा
किमुकुचौ तडिद्वातारावाकनकलतिका वा किमबला इति ।
संभावनासंशयः । विशेष्यतासम्बन्धेनेति । किमिन्दुरित्यत्रेद-

प्रकारिता सम्बन्धेनतच्चविशेषणस्यचन्द्रादेरन्वयः नामार्थेनाव्ययार्थस्याभेदान्वयेऽविरोधात् यत्रविशेषणवाचकमपिप्रथमान्तं तत्राभेदसम्बन्धावच्छिन्नप्रकारितासंसर्गः यत्रचप्रकृत्यर्थं विशेष्यतयास्वार्थबोधकविभक्त्यन्तं तत्र किंपदासत्वे ताद्दशविभक्त्यन्तसमुदायार्थस्य विशेष्येयादृशसम्बन्धेनान्वयस्तादृश संसर्गावच्छिन्नप्रकारतैवतादृशार्थस्य किंपदार्थेसंसर्गीतः किमिन्दुरित्यादावभेदेन चन्द्रादिप्रकारिकाधनमिदं किंचैत्रस्येत्यादावाश्रयतासम्बन्धेन चैत्रस्वत्वादिप्रकारिका सम्भावनानियमतःप्रतीयते। किमिन्दुरित्यादौसम्भावनाबोधोत्तरं तत्प्रयोजकाल्हादकत्वादिसाधर्म्यप्रतीतिरर्थादिति ॥ कुत्सार्थकमपि क्वचित्किंपदं, यथा किंगौरित्यादौ ॥

---

गितिविशेष्यवाचकपदमध्याहार्यं तथा भेदसंसर्गावच्छिन्नप्रकारतासंसर्ग केन्दुविशेष्यकसंशयस्य विशेष्यतासंम्बन्धेनेदं त्वावच्छिन्नविशेष्यताकबोधः। नामार्थयोर्भेदान्वयस्य विरुद्धत्वात् कथमेतदित्याह। नामार्थ इति। अव्ययार्थस्येति। निपातत्वमेव बीजम्। अव्ययकिमोनिपात इत्यन्वयबोधात् तथा च निपातातिरिक्तनामार्थयोर्भेदेनान्वयः व्युत्पत्तिविरोधमादधातीतिभावः। अथ स्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकत्वस्व सामानाधिकरण्योभयसम्बन्धेन प्रकारताविशिष्ट प्रकारतावज्ज्ञानमेवसंशयपदार्थः अभेदसंसर्गावच्छिन्नप्रकारतासंसर्गेन्दुविशिष्टस्य तादृशसंशयस्य विशेष्यतासम्बन्धेन इदं पदार्थे विशेष्येन्वयेपि न इदं त्वावच्छिन्नविशेष्यता

काभेदसम्बन्धेन इन्दुप्रकारकसंशयस्यलाभः। अन्यच्च इन्दुप्रकार-
कसंशयात्मकइदंपदार्थविशेष्यकज्ञानमादायापितत्सम्भवादि-
तिचेन्न ज्ञानमेवार्थकिंपदार्थः तत्रइदंत्वावच्छिन्नविशेष्यता-
निरूपितेन्दुभेदत्वावच्छिन्न प्रकारताविशिष्टाभेदसंसर्गावच्छि-
न्न प्रकारतासंसर्गेण इन्दोरन्वयेनानुपपत्त्यभावात्। तादृशसं
सर्गस्तुआकाङ्क्षालभ्यएवएतल्लाभायैवसंभावनात्मकंज्ञानमित्यु
क्तं,प्रकारतावैशिष्ट्यं चनिरूक्तोभयसम्बन्धेनेति। अर्थादिति। आ
लंकारिकमतेव्यञ्जनातःशाब्दबोधरूपंनैयायिकमतेमानसमित्य-
न्यदेतत्एवमन्योन्याभावप्रतियोगितानवच्छेदकपर्य्याप्तिकध-
र्म्मावच्छिन्नेकिंपदस्यशक्तिर्बोध्या। नत्वदन्यः कोनददातिकिंप-
त्योरिहकोनकोनतमसिव्रीडोमिश्रोरसइत्यादौत्वदन्यः सर्वोदा-
नकर्त्तासर्व्वैरसोभवतिइत्यादिबोधस्यत्वदन्यः कोददातिकः स-
म्बन्धे विरहविधुरांत्वय्युपेक्षतेजायांस्यादन्योप्यहमिवेत्यादौ-
त्वदन्यःसर्वोनददातिपराधीनवृत्तिशून्यः सर्वोविरहविधुरांजा-
यांनोपेक्षतेइत्यादिबोधस्यनानुपपत्तिःत्वदन्यः कोनददातिइत्या
दौत्वदन्यः सर्व्वोददातिइत्यादौ तादृशबोधस्यानुभवसिद्धत्वेपि
तादृशवाक्यघटकाभाववान्वयेनत्वदन्यः सर्व्वोददातृत्वाभाववा-
न् इत्येवबाधोभवितुमर्हति कथंतादृशान्वयबोधइति । अत्र-
अलिकुलकोकिलललितेनेष्यतिसुरतिसमयेसौइत्यादौकाकुशादृ
शतादृशवाक्येनासंलक्ष्यक्रमव्यङ्ग्ययथासुरतिसमयेसौइष्यतिइ-
त्येतादृशार्थबोधस्तथातादृशस्थलेपितादृशन्वयबोधइतिसमाधान-
मालंकारिकाणामेवशोभतेनतुनैयायिकानांतैर्व्यञ्जनावृत्तेरन
भ्युपगमात्।नचतादृशस्थलेअभावाभावेनओलक्षणात्वदन्यःसर्वो
दानकर्तृत्वाभावाभाववान्इत्यन्वयबोधात्दानकर्तृत्वाभावा-
भावरूपस्यदानकर्तृत्वस्यनबोधानुपपत्तिरितिवाच्यम्। अभावाभा-

वस्त्राभावत्वावच्छिन्न प्रतियोगिताकाभावरूपत्वेप्रसिद्ध: अभा
वप्रतियोगिताकाभावत्वे त्वदन्यसर्वस्मिन्दातृत्वासत्त्वेपिउ-
भयाभावादिकमादायतादृशप्रयोगापत्तेर्दुर्वारत्वात् । यत्तु त्वद
न्यसर्वत्वावच्छेदेनदानकर्तृत्वमेव प्रत्याय्यतेनञ्पदं तुतादृश-
वच्छेदकावच्छेदेनान्वयेतात्पर्यग्राहकमिति,तन्मन्दम् । तथा-
सतितादृशवाक्यघटकयुष्मत्पदार्थेऽनुभवसिद्धस्यदानकर्तृत्वाभा
वबोधस्यापलपापत्ते: । तत्रदानकर्तृत्वसत्वेपित्वदन्यसर्वत्वा-
वच्छेदेनदानकर्तृत्वस्याव्याघातात् । एतेनत्वदन्य:सर्वोदान-
कर्तृत्वाभावाभाववानित्येवान्वयबोध:तत्रनञर्थाभावेआख्या-
तार्थस्य दानकर्तृत्वस्यान्वय: तादृशान्वयलभ्यस्यदानकर्तृ-
त्वाभावस्यनञर्थाभावेपुनरन्वय: आकांक्षावैचित्र्यात् एकनञ्
पदोपस्थाप्यभावस्य द्विधान्वयोगमात् इतिनिरस्तमितिकेचि
दुक्तं तदत्यन्तमसत् तादृशयुष्मत्पदार्थे शब्दतस्तादानकर्तृत्वाभा-
वाबोधासम्भवेपित्वदन्यपदवैयर्थ्यशङ्कामूलकार्यतस्तदसंभ-
वात् । परेतुत्वदन्य: कोनददातीत्यस्यत्वदन्य: सर्वएवददातीति
शब्दजन्यबोधसमानाकारकबोधजनकतयानञ्पदसत्त्वान्यत्वव-
च्छेदार्थमेवेति त्वदन्यसर्वान्वदान कर्तृत्वाभाववोधस्यनशब्द-
तोनुपपत्ति:एवं सर्वरसोभरत्वेवदित्यत्र क्रियासंयुक्तएवकार्ययोग-
व्यवच्छेदवत् कोरसोनभवतीत्यादावपिसर्वरसत्वावच्छेदे-
न उत्पन्नत्वविरोध्युत्पन्नत्वाभावाभावोनञाप्रत्याय्यतेइतिप्रा
हु: । एवंत्वदन्य:कोददातीत्यादौत्वदन्य: सर्वोदानकर्तृत्वा-
भाववानिति बोधस्तु अलंकारिकाणां काकुमहिम्ना तादृशवा-
क्यव्यञ्जनात: अस्माकंतु आख्यातार्थकृतिसंख्या ध्वंसाभावस्यच प-
रस्परमन्वयेनतादृशवाक्यघटकयुष्मत् पदार्थेदानकर्तृत्वबोध-
स्त्वार्थ: , तदन्य: कोराजाइत्यादौविपरीतलक्षणायात्वदन्य: स-

तत्पदप्रतिपाद्यतया वक्तृबुद्धिविषयतावच्छेदकत्वोपल-
क्षितधर्मावच्छिन्ने यत्पदस्य शक्तिः। अतएव यत्पदेनार्थप्र-
त्यायने नियमतस्तत्पदापेक्षा, तत्पदसमभिव्याहारज्ञानं
विनोक्तानुगमकधर्माग्रहेण शक्तिपरिच्छेदस्यैवासंभवा-
त्तच्छब्दजन्यप्रतिपत्तिपूर्वमपि तत्प्रतिपाद्यतया वक्तुर-
भिसंधिः प्रकरणादिना सुग्रह इति न तच्छब्दजन्यप्रतिप-
त्तेर्यत्पदशक्तिग्रहेऽपेक्षा। इयं च व्युत्पत्तिः प्रक्रम्यमाणप-
रामर्शकयच्छब्दस्य। चैत्रः समागतो यस्त्वयावलोकित
इत्यादौ चैत्रादिपदेनाप्युपस्थापि तस्य यच्छब्देन बोध
नात्। अतएव साधुचन्द्रमसि पुष्करैः कृतं मीलितं यद-
भिरामताधिके। *उद्यता जयिनि कामिनीमुखे तेन सा-
हसमनुष्ठितं पुनरित्यादौ तत्पदासत्त्वेऽपि न दोषः। पूर्वप्र-
क्रान्तस्यैव कृतशब्दोपस्थापितव्यापारस्याभेदेन मीलना-
न्वयितया यच्छब्देन बोधनात्। एवं यं सर्वशैला इत्यादा-

वौ राजभिन्नः इत्याकारकबोधस्तादृशतादृशस्थले तादृशतादृश-
पदस्याभावादौत्सर्गिकतया अनादितात्पर्य्यमूलकतया न कवि-
काव्यादौ तत्प्रयोगे नियम इति मदेकपरिशीलितपद्धतिः।
शक्तिपरिच्छेदः। शक्तिज्ञानं वक्तुरभिसन्धेर्वक्तुर्ज्ञानं, तत्पदज-
न्यप्रतीतिविषयतावद्घटो वा मदिष्टसाधनमित्याकारकप्रकल्प्य-
मानपरामर्शक इति। स्वोत्तरप्रयोक्तृपदोपस्थापितवाचीत्यर्थः।
यथा यो यो धूमवान् स वह्निमान् इत्यादौ तत्र तत्पदशक्ति-
स्तु स्वप्रयोजकबुद्धिविषयतावच्छेदकोपलक्षितधर्मावच्छिन्ने बो-
ध्या। साधुचन्द्रमसीति। श्लोकशेषार्द्धस्तु उद्यता जयिनि कामिनी-
मुखेऽनेन साहसमनुष्ठितं पुनरिति। अस्यायमर्थः। अभिरामता-
धिके स्वापेक्षयातिसुन्दरचन्द्रमसि पर्य्याउदिते सति पुष्करैः पद्मैः

* उत्तरार्द्धस्तु मूले प्रक्षिप्तः।

वपि । तदनुरोधेन पूर्वप्रयुक्तपदोपस्थापितैपितस्य शक्य-
तास्वीकरणीयम् । अतिप्रसङ्गश्च स्वप्रयोजकबुद्धिस्थत्वम-
न्तर्भाव्य वारणीयः । एवं यत्पदोपस्थाप्ये तत्पदशक्तिर्वि-

साधु क्रान्तं यन्मीलितं जयिनि कामिनीमुखे सति उदयगाचन्द्रेण पुनः साहसमनुष्ठितमिति । पूर्वप्रयुक्तपदोपस्थापित इति । स्वोच्चारकपुरुषोच्चरितस्वपूर्वपदोपस्थाप्यतावच्छेदकधर्मावच्छिन्ने । तस्य, यत्पदस्य । ननु हिमालयस्यैवाद्रिगादेरपि पूर्वप्रयुक्तपदोपस्थापिततया तत्रापि तादृशयत्पदस्य शक्यत्वापत्तिरत आह । अतिप्रसङ्गश्चेति । प्रयोज्यबुद्धिस्थत्वमिति । तथा च स्वप्रयोजकबुद्धिविषयतावच्छेदकतादृशपदोपस्थाप्यतावच्छेदकधर्मावच्छिन्ने शक्तिकल्पनान्नाद्रिगादौ अतिप्रसंग इति भावः । ननु स्वप्रयोजकबुद्धिविषयतावच्छेदकावच्छिन्न एव तादृशयत्पदस्य शक्तिरुच्यतां किं तादृशपदोपस्थाप्यतावच्छेदकत्वनिवेशेनेति वाच्यम् । हिमालयादेः पूर्वपूर्वपदानुपस्थितत्वे हिमालयादिशब्दाप्रयुक्तेनापि यत्पदेन हिमालयादिबोधस्यानुभवसिद्धतया तन्निवेशस्यावश्यकत्वात् । एवं यत्पदोपस्थाप्य इति । यत्पदोपस्थाप्यतावच्छेदकधर्मावच्छिन्ने । न च यत्पदोपस्थाप्यतावच्छेदकधर्मावच्छिन्ने शक्तिस्वीकारे यत्पदशक्तिग्रहाधीनपदपदार्थोपस्थिति-स्तितो यत्पदोपस्थाप्यतावच्छेदकत्वरूपानुगतधर्मग्रहस्ततस्तादृशानुगतधर्मोपलक्षितधर्मावच्छिन्ने तत्पदशक्तिग्रहः तत्-स्थलीयतत्पदशक्तिग्रहस्य स्वपूर्वतत्पदोपस्थाप्यतावच्छेदकधर्मावच्छिन्न इति । यत्पदशक्तिग्रहस्तादृशानुगतधर्मग्रहाधीनस्तादृशानुगतधर्मस्य तत्पदशक्तिग्रहाधीन इत्यन्योन्याश्रयस्यात् पदप्रतिपाद्यतावच्छेदकधर्मावच्छिन्ने शक्तिस्वीकारेपि यत्पदशक्तिज्ञानाधीनाप्रतीतिस्तत्तोऽनुगतधर्मग्रह इति पूर्वो-

ख्या । अतएव प्रक्रान्तस्य मानापरामर्शकतच्छब्देनापि नि-
यमतो यत्पदमपेक्षितं तमानय य इहास्तीत्यादाविव त-
मानय घट इहास्तीत्यादितो घटानयनादिप्रतीतेरनु-
भवविरुद्धत्वात् । प्रक्रान्तपरामर्शकस्य च न तदपेक्षानि-
यमः । तदन्वये शुद्धिमतीत्यादौ वैवस्वतादिपदानुपस्थाप्य-
स्यापि तच्छब्देन परामर्शानुरोधेन तच्छब्दस्यापि
पूर्वप्रयुक्तपदोपस्थाप्यापि तच्छक्यत्वमङ्गीकार्यमुपस्थितिश्च
स्वविशेष्यकवृत्तिज्ञानाधीना ग्राह्या । अतः पशुरस्ति तं प-
श्येत्यादौ पश्वादिपदोपस्थाप्यलोमादिना तदादिश-
ब्देन न परामर्शः । प्रसिद्धार्थकमपि तत्पदम् । यथाक-

---

तागीत्या तथैवान्योन्याश्रय इति वाच्यम् । यत्पदप्रतिपाद्यतयावक्तृ-
बुद्धिविषयतावच्छेदकत्वोपलक्षितधर्म्मावच्छिन्ने तत्शक्तेः स्वपू-
र्वपदप्रतिपाद्यतया बुद्धिविषयतावच्छेदकधर्म्मावच्छिन्ने यत्
पदशक्तेश्च कल्पनात् । यत्पदादिप्रतिपत्तेरनपेक्षितत्वेऽपि प्रकर-
णादिना तादृशानुगतधर्मग्रहसम्भवान्नान्योन्याश्रयशङ्कावकाशः ।
एवं च यत्पदोपस्थाप्य इति वस्तुकथनं नत्वनुगतधर्म्मप्रदर्शन-
मिति ध्येयम् । पूर्वप्रयुक्तपदोपस्थापित इति । स्वोच्चारकपुरु-
षप्रयुक्तपूर्वपदजन्योपस्थितिविषयतावच्छेदकत्वोपलक्षितधर्मा-
वच्छिन्नेऽपि शक्तिरित्यर्थः तादृशविषयतावच्छेदकधर्मे स्वप्रयोज-
कबुद्धिविषयतावच्छेदकत्वं निवेशनीयम् । अतस्तदन्वये शुद्धि-
मतीत्यादौ वैवस्वतादेरतिरिक्तस्य पूर्वपदोपस्थाप्यत्वेऽपि न तादृश-
तत्पदाद्बोधः । न च तत्पदस्य तादृशशक्तिस्वीकारे पूर्वं स्वप्रयो-
जकबुद्धिविषयतावच्छेदकत्वोपलक्षितधर्मावच्छिन्ने शक्तिस्वीकारो
व्यर्थः । न च तदनङ्गीकारे तमानयेत्यादौ तत्पदेन घटादिबो-
धानुपपत्तिरिति वाच्यम् । इष्टत्वात् । स्वपूर्वपदोपस्थापितस्य त-

ताञ्च सा कान्तिमतीत्यादौ ॥ इदमेतदोः प्रत्यक्षबुद्धिविषयेशक्तिः । अदसः परोक्षबुद्धिविषयेशक्तिः । स्वशब्दस्यस्व

त्पदेन क्वचिदप्यबोधनात् अतएवग्रन्थकृता पूर्वं घटस्य प्रक्रान्तत्वलाभाय इहास्ति तमानयेत्युक्तमिति पूर्वोक्तायामेव शक्यतायां अवच्छेदके स्वप्रयोजकबुद्धिविषयतावच्छेदकधर्मे अतिप्रसङ्गभङ्गाय प्रसङ्गादिदानींस्वपूर्वंपदोपस्थाप्यतावच्छेदकत्वमात्रनिवेशे तात्पर्य्यात् न तु स्वातन्त्र्येण शक्तिकथनमिति ध्येयम् । प्रसिद्धार्थमपीति । प्रसिद्धत्वञ्चानेकज्ञानविषयत्वम् । कलाचसेति । समुदायश्लोकस्तु समागतं सम्प्रति शोचनीयतां समागमप्रार्थनया कपालिनः । कला च सा कान्तिमती कलावतसमस्तलोकस्य च नेत्रकौमुदीति पशुपतिप्रार्थनया तपःपरायणां पार्वतींप्रति कपटपरिच्छदस्य पशुपतेः स्वापकर्षत्वबोधिकोक्तिरियम् । तस्यायमर्थः कपालिनः शिवस्य समागमप्रार्थनापूर्वं कलावतस्य एकस्य सा प्रसिद्धाकलैव शोचनीयतां गता त्वया कपालिनः समागमप्रार्थनया सम्प्रति इयं शोचनीयम् । शोचनीयतां गतमिति कपालिन इत्यनेन कलायाः कान्तिमत्त्वस्य भगवत्या नेत्रकौमुदीत्वस्य कथनेन शोकबीजं प्रदर्शितम् । प्रत्यक्षबुद्धिविषये । लौकिकप्रत्यक्षविषयताविशिष्टे । ननु लौकिकप्रत्यक्षाविषयगगनादितात्पर्य्येणापि इदंशब्दस्यादित्यादिव्यवहारात् तत्र का गतिः ताहृशव्यवहारानङ्गीकार एव गतिः अङ्गीकारे तु गगनादितत्तद्व्यक्तित्वावच्छिन्नेऽपि नानाशक्तिकल्पनैवेति । तत्तद्व्यक्तित्वञ्च तत्तादात्म्यविशिष्टघटत्वादिकमेव न त्वखण्डोपाधिविशेषः अतिरिक्तधर्मकल्पनामपेक्ष्य क्लृप्ते व्यवहारविषयत्वकल्पनस्य न्याय्यत्वात् । नच तादात्म्यनिष्ठतत्त्वं तद्व्यक्तित्वमन्यस्य दुर्वचत्वात् तथा च तस्याखण्डरूपधर्मतया आवश्यकतया घटनिष्ठ-

समभिव्याहृतपदोस्थाप्ये शक्तिः समभिव्याहारस्यानैक-
वाक्यघटकत्वम् । अथैवं चैत्रःस्वपुत्रंपश्यतीत्यादाविवस्व

तादृशधर्मस्वीकार एवोचित इति वाच्यम् । अखण्डतादृशधर्म-
कल्पनेपि इदमादिपदस्य क्वचित्तादात्म्यस्यापि बोधकतया ता-
दात्म्यनिष्ठतादृशकल्पनस्यभवतोपिआवश्यकत्वात् । घटादिता-
त्पर्य्यकेदंपदस्य क्लृप्ततादृशधर्मघटितघटत्वादिबोधकतयैवोपप-
त्तेः घटनिष्ठतादृशधर्मकल्पनाया अन्याय्यत्वात् । न च तत्तद्घ-
टादितादात्म्यस्यतत्तद्घटादिस्वरूपतया नास्माकमतिरिक्तकल्प-
नेति वाच्यम् । तादात्म्यस्य घटाद्यतिरिक्तत्वात् । न चातिरिक्त-
तादात्म्यं कल्प्यते किं तादृशधर्म इत्यत्र विनगमकाभाव इति
वाच्यम् । तत्तद्घटादितादात्म्यस्य तत्तद्घटादिस्वरूपाद्यनेक-
त्वेन क्लृप्तपदार्थान्तर्गतत्वात् । नचतादृशरूपादेः घटाद्यप्रतियो-
गिकतया न घटसम्बन्धता इति वाच्यम् । तादात्म्यत्वेन सम्ब-
न्धतास्वीकारेण तत्प्रतियोगिकत्वोपगमात् । अन्यथा घटादि-
स्वरूपतोपगमेप्यनिस्तारात् । तादात्म्यस्य घटादिस्वरूपतामते
तु घटनिष्ठतद्व्यक्तित्वमखण्डमेवेति दिक् ॥ परोक्षमिति । परो-
क्षत्वं प्रत्यक्षभिन्नज्ञानत्वम् । स्वं चैत्रपुत्रः पश्यति चैत्रभ्रा-
ता स्वपुत्रंपश्यति इति । स्वपदस्य समस्तासमस्तभेदेनउदाहर-
णम् । ननु समभिव्याहृतपदार्थान्वयितावच्छेदकधर्मावच्छिन्ने
शक्तिकल्पनेपूर्वस्थलद्वये नचैत्रबोधापत्तिरित्यत आह । सुन्दर-
चैत्रस्येति । तथा च चैत्रस्य स्वसमभिव्याहृतसुन्दरपदार्था-
नुयोगितावच्छेदकतया तत्र स्वपदेन चैत्रबोधापत्तेर्दुर्वार-
त्वादिति । सुन्दरचैत्रभ्राता इत्युक्तौतत्पुरुषस्य चैत्रपदस्यसु-
न्दरचैत्रसम्बन्धित्वावच्छिन्न लाक्षणिकतया चैत्रस्य स्वसम-
भिव्याहृतपदार्थान्वयितावच्छेदकत्वाभावात् सुन्दरचैत्रस्य

चैत्रपुत्रः पश्यति चैत्रभ्राता स्वपुत्रं पश्यतीत्यादौ कथं न स्वशब्देन चैत्रः प्रत्याय्यते। मुख्यविशेष्यवाचकताव्युत्पत्त्यभ्युपगमे स्वपुत्रदर्शिनं चैत्रं मैत्रः पश्यतीत्यादौ चैत्रपुत्रबोधानुपपत्तिः। न च तत्रावान्तरवाक्यार्थबोधे चैत्रस्य मुख्यविशेष्यतया नेयमनुपपत्तिरिति वाच्यम्। अवान्तरवाक्यार्थभिन्नमन्तरेणाहत्यैव विशेष्ये विशेषणमित्यादिरीत्या महावाक्यार्थबोधे यत्र तात्पर्यं तत्रैव तदनुपपत्तेर्दुर्वारत्वात्। न च स्वार्थस्य साक्षात्परंपरया वा यदर्थविशेषणत्वं तादृशार्थवाचकताव्युत्पत्तेर्नायं दोष इति वाच्यम्। एवमपि स्वपुत्रश्चैत्रेण दृश्यत इत्यादौ चैत्रपुत्रबोधानुपपत्तेः। समभिव्याहृतक्रियान्वयिवाचकत्वमपि न विचारं सहते परंपरया क्रियान्वयित्वस्य चैत्रभ्राता स्वं पश्यतीत्यादौ चैत्रादिसाधारणत्वात्, साक्षात्क्रियान्वयित्वस्य चैत्रः स्वं पश्यतीत्यादावप्यभावात्।

---

भ्रातेत्यसमासेन निर्देशः। मुख्यविशेष्यवाचकतेति। स्वघटितवाक्यजन्यप्रतीतिमुख्यतावच्छेदकधर्मावच्छिन्नवाचकतेत्यर्थः। चैत्रबोधानुपपत्तेरिति। तादृशबोधकधर्मत्वांशे चैत्रस्य प्रकारतया मुख्यविशेष्यताविरहादिति भावः। आहत्यैव। तादृशवाक्यघटकपदजन्यपदार्थोपस्थितिघटितसामग्र्यैव इत्यर्थः। तादृशार्थवाचकेति। तथा च स्वपदार्थघटितविशेषणविशेष्यतावच्छेदकधर्मावच्छिन्नशक्तिकत्वान्न पूर्वोक्तदोषाणामवकाश इति भावः। चैत्रपुत्रबोधानुपपत्तेरिति। चैत्रबोधानुपपत्त्या चैत्रपुत्रबोधानुपपत्तेरिति भावः। स्वसमभिव्याहृतक्रियान्वयितावच्छेदकधर्मावच्छिन्नशक्तिकल्पनात् तादृशक्रियान्वयिवाचकमिति भावः। स्वपुत्रदर्शिनं चैत्रमित्यादौ चैत्रपरंपरया

क्रियान्वयिप्रत्ययार्थे साक्षादन्वयित्वविवक्षणान्नदोष
इति चेदेवमपि स्वव्यापकवह्निसमानाधिकरणधूमवा-
नयं पर्वत इत्यादौ स्वशब्देन धूमादिपरामर्शानुपपत्तेर्वारण
मशक्यमेव । एवं चैत्रेणावलोकितं स्वपुत्रं मैत्रः पश्यती
त्यादौ चैत्रपुत्रबोधापत्तिवारणमपि । मन्मते स्वपदार्थो यद
र्थघटितविशेषणस्य विशेष्यतावच्छेदककोटौ यदर्थस्य वि-
शेषणकोटौ वा निविशते स एव पदार्थः स्वशब्दवाच्यः । यथा
चैत्रेण स्वपुत्रो दृश्यते चैत्रः स्वपुत्रं पश्यतीत्यादौ । चैत्र-
पुत्रः स्वं पश्यतीत्यादौ चैत्रस्य भ्राता स्वपुत्रं पश्यतीत्या-
दौ च स्वपदार्थश्चैत्रस्य विशेषणकोटौ चैत्रघटितार्थस्य
धर्मितावच्छेदककोटौ वा न निविशत इति नातिप्रसं-
गः चैत्रावलोकितं स्वपुत्रं मैत्रः पश्यतीत्यादौ चैत्रपद-

---

र्थेन क्रियान्वयित्वेन स्वपुत्रश्चैत्रेण दृश्यते इत्यादावपि दर्शन-
क्रियान्वयित्वेन चैत्रबोधानुपपत्तिः । धूमादिपरामर्शानुपप
त्तेरिति । धूमादिबोधानुपपत्तेश्चैत्रबोधानुपपत्तिवारणमप्यश-
क्यमिति पूर्वेणान्वयः विशेष्यतावच्छेदककोटाविति । निविशत-
इति परेणान्वयः । तथा च स्वार्थान्वयितावच्छेदकधर्मावच्छिन्न-
विशेष्यतानिरूपितविशेषणतावच्छेदककोटिप्रविष्टपदार्थतावच्छे
दकधर्मावच्छिन्ने शक्तिरिति भावः । यदर्थस्य विशेषणकोटावि-
ति । तथा च स्वपदार्थघटितविशेषणविशेष्यतावच्छेदकधर्मा-
वच्छिन्ने शक्तिरिति भावः । चैत्रेण स्वपुत्रो दृश्यते चैत्रः स्व-
पुत्रं पश्यतीत्यादिस्थलद्वयसंग्रहाय उभयशक्तिकल्पनम् । चतए-
वकारः समुच्चयार्थः । पूर्वोक्तस्य तद्द्वयचैत्रबोधापत्तिं वारयति ।
चैत्रपुत्र इति । ननु चैत्रावलोकितं स्वपुत्रं मैत्रः पश्यतीत्या-
दौ स्वपदेन चैत्रबोधापत्तिः तत्र स्वपदार्थस्य चैत्रपदार्थघटि-

स्यचैत्रकर्तृकैत्वलक्षणायाश्चैत्रः पदार्थैकदेशो नतु पदार्थ इति स्वशब्दान्न तत्प्रतीतिः चैत्रेणावलोकितमित्यादौ तु तात्पर्यसत्त्वादिष्यत एव तत्र तत्प्रतीतिः स्वपुत्रदर्शि चैत्रधनमित्यादौ चैत्रपुत्रदर्शिचैत्रसंबन्धित्वावच्छिन्नचैत्रान्तस्यवाक्यलक्षणाविरहे तु पूर्वभागं परित्यज्य तादृशलक्ष्यार्थपरस्य केवलचैत्रादिपदस्यैव वा तत्र लक्षणात्तत एव चैत्रपुत्रादिप्रतीत्युपपत्तिरिति वाच्यम्। एवं सति चैत्रस्य भार्या स्वपुत्रो दृश्यते इत्यादौ स्वपदेन चैत्रादिप्रतीत्यापत्तेर्दुर्वारत्वान्मैवम्। साक्षात्परंपरया वा

---

तद्विशेषणस्य विशेष्यतावच्छेदककोटिप्रविष्टत्वात्। अतः चैत्रस्य प्रकृते चैत्रपदार्थतां निराकुर्वतां वारयति। चैत्रावलोकितमित्यादिना। पदार्थैकदेश इति। नतु पदार्थः पदजन्योपस्थितिमुख्यविशेष्यः। न च चैत्रस्य तत्स्वकीयचैत्रपदार्थत्वाभावेपि चैत्रपदार्थत्वं निराबाधमेवेति वाच्यम्। शक्यतावच्छेदककोटौ पदार्थतावच्छेदक इत्यनेन स्वसमभिव्याहृतपदार्थतावच्छेदकत्वविवक्षणादिति ध्येयम्। ननु स्वपुत्रदर्शिचैत्रधनमित्यादौ चैत्रस्य स्वसमभिव्याहृतपदार्थत्वाभावात् कथं स्वपदेन चैत्रप्रतीतिरत आह। स्वपुत्रदर्शीति। चैत्रप्रतीत्यापत्तेर्दुर्वारत्वादिति। अत्र स्वपदार्थस्य चैत्रघटितविशेषणस्य विशेष्यतावच्छेदककोटिप्रविष्टत्वादिति भावः। मैवमिति। साक्षात्परंपरया स्वार्थनिष्ठविषयतानिरूपितविशेष्यतावच्छेदकत्वेन वक्तृबुद्धिस्थत्वाद्युपलक्षिततद्धर्मावच्छिन्न एकशक्तिः एतादृशशक्तिकल्पनात् स्वव्यापकवह्निसमानाधिकरणधूमवान् पर्वत इत्यादौ स्वपदेन धूमबोधोपपत्तिरिति। सुतरां चैत्र इत्यादि संग्रहाय साक्षादिति। नच तत्र मतुपः सम्बन्ध्यर्थतया

चैत्रसम्बन्ध्यभिन्नश्चैत्र इति बोधो जायते । तथा च परंपरया
इत्यनेनैव बोधोपपत्तौ साक्षादित्यस्य वैयर्थ्यमिति वाच्यम् ।
मतुपो नामार्थद्वयस्याभेदान्वयसाकाङ्क्षतया चैत्रवांश्चैत्र इत्यत्र
तथान्वयबोधात् । यद्यपि उद्देश्यतावच्छेदकविधेयतावच्छेद-
कैक्यात् चैत्रवांश्चैत्र इत्यादिबोधो न जायते तथापि सुन्दरसु-
न्दरवांश्चैत्र इत्यादौ सुन्दरचैत्रवांश्चैत्र इत्यादिबोधस्य विधेयांशे
ऽधिकावगाहिनः सर्वसिद्धत्वान्नैव साक्षादित्यस्य व्यावृत्ति-
र्बोध्या इति । अपरा च विभक्त्यर्थत्वद्वारा स्वसमभिव्याहृत-
क्रियान्वयितावच्छेदकत्वेन वक्तृबुद्धिस्थत्वाद्युपलक्षितधर्माव-
च्छिन्ने तादृशशक्तिकल्पनात् चैत्रः स्वपुत्रं पश्यतीत्यादौ चै-
त्रादिबोधापत्तिरिति ध्येयम् । एवं च चैत्रस्य भ्रातेत्यादौ चैत्रस्य
साक्षात्परंपरया स्वपदार्थविशेष्यताभावात् स्वसमभिव्याहृत-
क्रियाकारकत्वाभावाच्च न स्वपदेन तद्बोधापत्तिरिति चैत्र-
स्यावसेः । किन्तु स्वपुत्रं चैत्रः पश्यतीत्यादौ तात्पर्य्यसत्त्वे इष्यत
एव स्वपदेन चैत्रप्रतीतिः । एवं स्वव्यापकवह्निसमानाधिकरणधू-
मवान् पर्वत इत्यादौ तात्पर्य्यसत्त्वे वह्निबोधोपि स्वपदेन इष्यत
एवेति ध्येयम् । यद्यपि चैत्रः स्वपुत्रं पश्यति चैत्रः स्वपुत्रं च-
क्षुषा पश्यतीत्यादौ दर्शनादेः परंपरया स्वपदार्थविशेष्यत्वात्
चक्षुरादेश्च समभिव्याहृतक्रियाकारकत्वाच्च स्वपदेन दर्शनच-
क्षुरादेरपि बोधापत्तिः । यदि च दर्शनचक्षुरादेः पुत्रादाव-
न्वययोग्यतया भासमानानां तात्पर्य्यसत्त्वेऽपि नान्वयबोधः आ-
न्तानामिष्यत एव तादृशबोध इत्युच्यते तथापि देवदत्तोऽ-
श्वेन स्वपुत्रं गमयतीत्यादौ स्वपदेनाश्वबोधापत्तेर्दुर्वारत्वा-
त् तत्राश्वस्य समभिव्याहृतक्रियाकर्त्तृकारकत्वात्तात्पर्य्य-
सत्त्वे तु तत्रेष्टापत्तेरनुभवविरोधात् । स्वसमभिव्याहृत-

स्वार्थस्य विशेष्यः यत्र समभिव्याहृतक्रियाकारकप-दार्थस्तदुभयत्र स्वपदस्य शक्तिः । स्वव्यापकवह्निसामा-नाधिकरण्यं धूम इत्यादावस्तीति क्रियाध्याहारात् स्वपदस्य समभिव्याहृतक्रियाकारकत्वसत्वात्तथैवेति न स्वपदात्तत्प्रतीत्यनुपपत्तिः । एवं कलशे निजहेतुदण्डजः किमु चक्रभ्रमकारितागुणः ॥ सदुकुचौ भवदभाभ्रचक्रभ्रमिमातनोति यदित्यादावप्यस्तीति क्रियाध्याहारात् स्वपदार्थनिजशब्दात्कलशादिप्रतीतिः । स्वव्यापकवह्निसामानाधिकरण्यं धूमस्येत्यादयस्तु न प्रयोगाः । इदं तु चिन्त्यते । यद्रूपेण समभिव्याहृतपदादुपस्थितिस्तद्रूपावच्छिन्नस्य स्वपदार्थत्वे एकेन ब्राह्मणेन ब्राह्मणान्तरपुत्रदर्शनदशायां ब्राह्मणः स्वपुत्रं न पश्यतीति प्रयोगानुपपत्तिः । सम्बन्धितावच्छेदकावच्छिन्नप्रतियोगिताकाभावस्य विशेष्यबाधात्समभिव्याहृतपदार्थनिष्ठतत्तद्व्यक्तित्वावच्छिन्नस्य तत्पदार्थत्वेऽपि वह्निकालीनद्रव्यवति क्षणादौ

क्रियाकारकपदं साहचर्यक्रियाकारकाधिकरणकारकपरमिति कश्चित्तन्न देवदत्तः स्वगृहे तिष्ठतीत्यादौ स्वपदेन गृहबोधापत्तेः कारकपदस्य केवलकर्तृकारकपरत्वे धूमव्यापकवह्निसमानाधिकरणधूम इत्यादौ स्वपदेन धूमबोधानुपपत्तिरिति सुधीभिरेव ध्येयम् । कलशे इति । स घटस्तस्या इमन्यथा उरुकुचौ भवत्प्रभाभरे चक्रभ्रमिमातनोतीत्यन्वयः । तदर्थत्वेनेति । स्वपदार्थेत्यर्थः । समभिव्याहृतपदार्थनिष्ठोभयाद्वृत्तिधर्मावच्छिन्ने स्वपदस्य शक्तिरिति तात्पर्य्यं नानानानाशक्तिरिति ध्येयम् । कतिपयाभावगोचरप्रतीतेरप्यक्ती-

वच्छ्यादिविशिष्टे शक्तिः । कैवल्यं च सजातीयद्वितीय-
रहितत्वं, तच्च सजातीयनिष्ठभेदाप्रतियोगित्वं, स-
जातीयत्वं चोद्देश्यविशेषणतावच्छेदकावच्छेदकैवल्यघ-
टकत्वेन प्रकृतविधेयस्वरूपं प्रतीयते तथा चात्रा-
यमेको भुङ्क्ते इत्यादावेतद्देशाधिकरणकभोजनकर्तृ-
निष्ठभेदाप्रतियोगी अयमेव भुङ्क्ते इत्याद्याकारको बो-

---

ध्यादौ स्वाश्रयत्वस्वनिरूपकवृत्तिनिष्ठव्यापकत्वोभयसम्बन्धेन स्व-
व्यापकवृत्तिकालीनस्य द्रव्येऽन्वयबोधः । एवं ब्राह्मणः स्वं पश्य-
तीत्यादौ ब्राह्मणकर्मतावच्छिन्नदर्शनकर्तुः स्वनिरूपकदर्शनविषयत्व-
तादात्म्योभयसम्बन्धेन ब्राह्मणेन ब्राह्मणान्तरदर्शनदशायां ब्रा-
ह्मणः स्वं न पश्यतीत्यादौ तादृशोभयसम्बन्धावच्छिन्नप्रतियोगि-
ताकब्राह्मणकर्मकदर्शनानुकूलकृतेरभावः प्रत्याय्यते । एवमन्य-
दप्यूह्यम् । स्वनिरूपकदर्शनविषयत्वपुंजनकत्वादिसम्बन्धस्य
वृत्त्यनियामकतया तत्सम्बन्धघटितोभयसम्बन्धावच्छिन्नप्रति-
योगिताकाभावाप्रसिद्धिरित्यस्वरसः केचिदित्युक्त्या सूचित इ-
ति । यदि च संयोगादिना व्याप्यवृत्तेरपि संयोगस्याव्याप्यवृ-
त्तिसाधारणप्रमेयत्वादिना यथा व्याप्यवृत्तित्वं तथा तादृशज-
नकत्वादिना वृत्त्यनियामकस्यापि तादृशजनकत्वादेराश्रयत्वा-
दिसाधारणोभयत्वादिना वृत्तिनियामकत्वं चेति वृत्त्यनिया-
मकसंयोगस्य सत्त्वेऽपि वृत्तिनियामकसाधारणसंयोगत्वादिना
संयोगस्य प्रतियोगितावच्छेदकसम्बन्धत्ववत् स्वाश्रयत्वसम्ब-
न्धरूपवृत्तिनियामकसाधारणोभयत्वादिना तादृशजनकत्वादेः
प्रतियोगितावच्छेदकसम्बन्धत्वे बाधकविरहान्न दोष इत्यव-
धेयम् । एतद्देशाधिकरणकभोजनकर्तृनिष्ठभेदाऽप्रतियोगी-
ति । भेदस्य च स्वाश्रयवृत्तित्वस्वनिरूपकत्वोभयसम्बन्धेन प्र-

धः । शक्यतावच्छेदकाननुगम उक्तदिशा चिन्तनीयः । अयं फलमेकं भुङ्क्ते फलं भुञ्जानस्तिष्ठतीत्यादौ विधेयतावच्छेदककोटिनिविष्टार्थकैकपदस्य यादृशार्थविशेषणतापन्ने यदवच्छिन्ने स्वार्थान्वयिनि । विशेषणत्वं तादृशार्थानुयोगिकान्वयप्रतियोगित्वविशिष्टतद्रूपावच्छिन्नानुयोगिकान्वयप्रतियोगिनिष्ठभेदाऽप्रतियोगित्वरूपसामान्यं प्रतीयते । अतस्तत्र चैतत्कर्तृकभोजनादिनिष्ठसंसर्गप्रतियोगिकर्मत्वादिनिष्ठसंसर्गप्रतियोगिनिष्ठभेदाप्रतियोगित्वं फलादौ प्रतीयते ।

---

तियोगितावच्छिन्नान्योन्याभावः नातिरिक्तत्वावच्छिन्नभेदसामान्याप्रसिद्धिः । उक्तदिशा चिन्तनीय इति । स्वार्थान्वयितावच्छेदकधर्मावच्छिन्नोद्देश्यतानिरूपितविधेयतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नवन्निष्ठभेदप्रतियोगितावच्छेदके शक्तिस्वीकारात् नाननुगम इति । यादृशार्थविशेषणतापन्न इति । यादृशार्थे एतत्कर्तृकभोजनरूपः, यदवच्छिन्ने, कर्मतात्वावच्छिन्ने, स्वार्थान्वयिनि, एकपदार्थान्वयिफलादेः, इदमत्रावधेयम् । अयं फलमेकं भुङ्क्ते इत्यादौ एकत्वविशिष्ट एव एकपदार्थस्याभेदेन फलान्वये एकत्वस्यापि स्वाश्रयत्वस्वाश्रयफलकर्मताकैतत्कर्तृकभोजनकर्मतावन्निष्ठान्योन्याभावाप्रतियोगित्वोभयसम्बन्धेन फलेऽन्वयस्वीकारात् द्विफलभोजनस्थलेन तथाविधप्रयोगप्रसंगः अन्यथा अयं फलमेकं भुङ्क्ते फलमेकं ददातीत्यादिसाधारणशक्यानुगमकरूपाभावात् नानाशक्तिप्रसङ्गः तत्स्वीकारेऽनुभवविरोधश्च । अनुभवविरोधस्यापि विरहे न विवदाम इति । एवमयं हस्तेनैकेन ददातीत्यादौ स्वाश्रयत्वकरणकैतत्कर्तृकदानकरणनिष्ठाऽन्योन्याभावाप्रतियोगित्वघटिततादृशोभयसम्ब-

शैक्यस्य दुरपह्नवत्वात् । यत्तु एकविशिष्टापरावच्छिन्नं शक्तिरिति । तदसत् । विशेषणविशेष्यभावे विनिगमनाविरहात् गवादौ साक्षादुभयप्रकारकबोधस्यानुभवसिद्धस्य दुरपह्नवत्वाच्च । यत्र केवलाकृतिविशिष्टे गवादिपदस्य तात्पर्यं, यथा पिष्टमय्यो गाव इत्यादौ तत्र शुद्धगोत्वावच्छिन्नपरधेन्वादिपद इव लक्षणैव । जात्याकृतिविशिष्टायां व्यक्तौ शक्तेरैक्यं जात्याकृतिव्यक्तयः पदार्थ इति न्यायसूत्रे बहुवचनमुपेक्ष्य पदार्थ इत्येकवचनं निर्दिष्टवतो महर्षेरप्यनुमतम् । मीमांसकास्तु गवादिपदानां जातिरेव वाच्या न तु व्यक्तिः आकृतिर्वा । व्यक्तिशक्तिमन्तरेणापि स्वरूपसतस्याग्रहात् स्वत्वेन शक्तिज्ञानप्रकारीभूतायां जातौ शक्तिस्तदवच्छेदकतयावश्यकल्पनीयतया व्यक्त्यादौ

रिति भावः । दुरपह्नवत्वात् । दुरपह्नवत्वात् बोधविषयताया-ऐक्यादिति भावः । विनिगमनाविरहादिति । शक्तिद्वयकल्पनापत्तिरिति शेषः । ननु एकविशिष्टापरावच्छिन्नबोधस्यानुभवसिद्धत्वे शक्तिद्वयं कल्पनीयमत आह । गवादाविति । जात्याकृतिव्यक्तयः पदार्थ इति एकशक्तिमन्त इत्यर्थः । न च विशेषणवाचकपदस्य विशेष्यवाचकपदसमानविभक्तिकत्वनियमात् पदार्थ इति कथमेकवचनान्तम् इति वाच्यम् । विशेष्यवाचकपदोत्तरविभक्त्यर्थसंख्याविरुद्धसंख्याया अविवक्षितत्वम् तत्रैव समानवचनत्वनियमात् तथा चात्र विशेष्यवाचकपदोत्तरविभक्त्यर्थविरुद्ध एकत्वसंख्यायाः प्रकृतेऽविवक्षणीयत्वान्नैकवचनानुपपत्तिरिति । जातिरेव । गोत्वादिजातिरेव, तस्याः, व्यक्तेः, गोत्वादिति । ननु प्रयोजनसत्त्वे गौरवमकिञ्चित्करमत आह ।

तत्कल्पनायां गौरवात्प्रयोजनविरहाच्च । व्यक्तिशक्ति-मते जातिरूपलक्षणत्वासम्भवः प्रागेव दर्शितः यथा व्यक्तिशक्तिमतेऽपि गोत्वांशे शक्तितदवच्छेदकता वा विशेषणानवच्छिन्नैव तथा जातिशक्तिवादिमतेऽपि सा तथैवेति न गोत्वत्वादिप्रवेशाद्गौरवशङ्कापि । नच जातिशक्तिमतेऽपि शाब्दबोधे सा किञ्चिद्धर्मप्रकारेण भासते येन प्रकारभानार्थं प्रकारविशेषमन्तर्भाव्य शक्तिः कल्पनीयाऽपि तु स्वरूपत एव । यथानुमानादि-ना गोत्वादौ शक्तिग्रहो भवद्धर्मितावच्छेदकतया गो-त्वत्वादिकमवश्यं विषयीकरोति । निर्धर्मितावच्छे-दकज्ञानस्यानुमानादिना जननासम्भवात् । तादृश-ज्ञानस्य विपरीतज्ञानाऽविरोधितयाऽनुपयुक्तत्वाच्च ।

---

प्रयोजनेति । ननु यद्यपि शक्तिः शक्यतावच्छेदकता वा जातौ न स्वीक्रियते किन्तु व्यक्तौ निरवच्छिन्नैव, गोत्वप्रकार-कशाब्दबुद्धौ गोत्वधर्मितावच्छेदकशक्तिज्ञानस्य हेतुत्वात् । स्वरूपतोव्यक्त्युपस्थेऽपि च तद्विरह इति व्यक्तिशक्तिमतेऽपि न गौ-रवमत आह व्यक्तिशक्ताविति । जातिरूपलक्षणत्वासम्भवः प्रागेव दर्शित इति । द्रव्यत्वधर्मितावच्छेदकघटादिपदशक्तिप्रमातः द्रव्यत्वरूपेण द्रव्यबोधोत्पत्त्या इत्यादिः । सा, जातिः, अनुमाना-दिनाजननासम्भवादिति । ननु निर्धर्मितावच्छेदकमानसमे-व सर्वत्र शक्तिज्ञानमङ्गीकार्यमत आह । तादृशज्ञानस्येति । नि-र्धर्मितावच्छेदकशक्तिज्ञानस्येत्यर्थः । विपरीतज्ञानाविरोधित-या, गोत्वं गोपदशक्यं न वा इत्याकारकसंशयाद्यविरोधितये-त्यर्थः । अनुपयुक्तत्वात् । अशक्यत्वविपरीतज्ञानस्यैव शाब्दबो-धजनकत्वादिति भावः । एवञ्च शक्यत्वग्रहविरोधिग्रहस्याहेतु-

एवं च ताद्दशधर्मस्य शक्यतावच्छेदकत्वं दुर्वारमेव शक्तिग्राहकमानेनधर्मितावच्छेदकांशे तदवच्छेदकताग्रहेबाधकाभावात्। यदि चावच्छेदकताग्रहेपि शक्तिधियस्तदंशे भ्रमत्वं कल्प्यते विषयवाधेनावच्छेदकत्वमेव वा शक्तिग्राहकमानेन न गृह्यत इत्येव स्वीक्रियते तदा प्रतियोगित्वकारणत्वादीनामपितुल्ययुक्त्यावच्छेदकत्वविलयप्रसङ्गः तथाप्येवं सुवचत्वात्। प्रतियोगित्वादिबुद्धेरवच्छेदकत्वावगाहित्व मनुभवसिद्धमिति यदि तदाशक्तिधियस्तदवगाहिता न तथेति वचसि को वाश्रद्दधाति विशेषाभावात्। माभूद्वा गोत्वत्वादिकमवच्छेदकं शक्तेस्तथापि शक्तिज्ञानकारणतायां गुरुशरीरगोत्वत्वादेर्धर्मितावच्छेदकतात्मकविषयतानिवेशाद् गौरवं दुर्वारमेव। व्यक्तिशक्तिवादिना स्वरूपतो गोत्वादिनिष्ठधर्मितावच्छेदकत्वस्यैव निवेशादिति चेन्न। स्वरूपतः पदविशेषणतापन्नशक्तौ निरूपितत्वसम्बन्धेन शक्तिसम्बन्धेन पदे वा गोत्वादिप्रकारिकाया एव शक्तिधियः स्वीकारात्। नहि समवायेनैव जातेः स्वरूपतः प्रकारे-

त्वे च, ताद्दशधर्मस्य, शक्यत्वग्रहधर्मितावच्छेदकस्य गोत्वादेः, तदंशे, गोत्वनिष्ठशक्यतावच्छेदकांशे, अवच्छेदकग्राहकत्वम्, अवच्छेदकविषयकत्वं, तदवगाहिता न तथानुभवसिद्धा, शक्तिधियः स्वीकारादिति। पदविशेषणतापन्नशक्यंशे निरूपितत्वसम्बन्धेन स्वरूपतो गोत्वादिप्रकारकशक्तिधीस्तु पदं गोशक्तिमदित्याकारिका, प्रामाण्यस्य स्वतोग्राह्यत्वमते अयं घट इत्याकारकज्ञानस्य घटं जानामीत्याकारकानुव्यवसायस्यैवोत्पत्त्या तत्र विष-

मेति नियमः प्रामाणिकः घटं जानामीत्यादौ प्रकारितासम्बन्धेन स्वरूपतो घटत्वादीनां ज्ञानादंशे प्रकारतोपगमात्। समवायेन धर्मिविशेषणतापन्नस्यैव सम्बन्धान्तरेणान्यत्र स्वरूपतो भानमित्यपि न नियमः प्रामाण्यस्य परतो ग्राह्यतामतेऽयं घट इत्याकारकस्य स्वरूपतो घटत्वादिज्ञानस्यानुव्यवसाये प्रकारितायां तत्सम्बन्धेन ज्ञाने वा समवायेन धर्मिविशेषणतामापन्नस्यैव घटत्वादेर्ज्ञानात्। यत्तु वा प्रकृतेपि गवादिविशेषणतापन्नस्यैव गोत्वादेः शक्तौ निरूपकत्वसम्बन्धेन पदे वा शक्तिसम्बन्धेन स्वरूपतः प्रकारता। गवादेस्तु शक्तौ पदे वा परंपरासम्बन्धेन प्रकारता तादृशी च गवादिविषयता न शाब्दबोधजनकतावच्छेदिकेति परंपरासम्बन्धेन प्रकारतायाः जनकतावच्छेदकत्वापेक्षया साक्षात्सम्बन्धावच्छिन्नप्रकारतायास्तथा त्वेलाघवेन व्यक्तिशक्तिसिद्धेर्नावकाशः। यथ जातिशक्तिमतेपि शाब्दबोधे व्यक्तिभानमा-

यितया घटभाने घटविशेष्यित्वावच्छिन्नप्रकारितायां निरूपितत्वसम्बन्धेन तादृशप्रकारितासम्बन्धेन ज्ञाने घटज्ञानात् तन्मते समवायि धर्मिविशेषणतापन्नस्यैव अन्यसम्बन्धेन स्वरूपतो भाननियमादित्यत आह। परतो ग्राह्यत्वमत इति। स्वाश्रयज्ञानजनकसामग्रीतः तन्मते अयं घट इत्याकारकज्ञानस्य घटत्वं जानामीत्याकारकानुव्यवसायज्ञानस्य तादृशप्रकारितायां निरूपितत्वसम्बन्धेन तादृशप्रकारितासम्बन्धेन ज्ञाने स्वरूपतो घटप्रकारकानुव्यवसायोदयादिति भावः। उभयमतसाधारण्यार्थमाह। यत्तुवेति। व्यक्तिशक्तिसिद्धेर्नावकाश

बद्धयकं गौर्नष्टा गौर्जाता गामानयेत्यादौ समभिव्याहृतान्वयस्य जातौ बाधात्परंपरासम्बन्धेन तदन्वयोपगमेऽप्यन्वयितावच्छेदकतया गोत्वत्वादिभानस्वीकारापत्तेः शक्तौ गोत्वत्वाद्यन्तर्भावापत्तेश्च । न हि स्वरूपेण पदार्थस्य पदार्थान्तरान्वयितया भानं कश्चित्स्वीकुरुते । स्वीकुरुतां प्रकारतया स्वरूपेणोपस्थितजातेर्भानं विशेष्यतया तद्भानं तु न सम्भवत्येव । निधर्मितावच्छेदकशाब्दबोधस्य प्रवृत्त्यनुपयोगितया स्वीकारासम्भवात् । एवं च जातिमात्रवाचकत्वेनाभ्युपगतपदस्यापि व्यक्तिबोधजनकतायामविवादाच्छक्तिग्रहाद्धु वैव शक्तिभ्रमाजन्यलक्षणाग्रहाजन्यतद्बोधजनकताया एव तच्छक्तिसाधकत्वात् अन्यथा जातावपि शक्त्यसिद्धिप्रसङ्गात् । एवं शक्तेरीश्वरसङ्के-

हूति । तन्मते शक्तिविषयतानिष्ठशाब्दबोधजनकतावच्छेदकतानिरूपितावच्छेदकताश्रय प्रकारत्वस्य शक्यत्वव्याप्यत्वादिति भावः। समभिव्याहृतपदार्थानां नाशप्रतियोगित्वोत्पत्त्याश्रयत्वादिपरंपरासम्बन्धेन स्वाश्रयवृत्तित्वादिसम्बन्धेनगोत्वत्वादिभानाङ्गीकारापत्तिरिति गोत्वत्वाद्यनुपस्थितिदशायां गौर्नष्टेत्यादिशाब्दबोधस्यानुभवसिद्धतया तदनुपपत्तिरिति ध्येयम् । ननु स्वरूपेण पदार्थस्य पदार्थानन्वयित्वे घटं जानामीत्यादौ विशिष्टतात्पर्यस्थले घटान्वयि द्वितीयार्थविषयतायां घटत्वस्यावच्छिन्नत्वसम्बन्धेन प्रकारतया अन्वयानुभवसिद्धस्यानुपपत्तिरत आह । स्वीकुरुतेति । तद्बोधजनकतायास्तद्विषयकत्वावच्छिन्नजनकतानिरूपितजनकतात्वस्येत्यर्थः । शक्तिभ्रमाद्यप्रयोज्यत्वप्रयोज्यत्वविषयकत्वावच्छिन्नजनकताकस्य स्वस्मिन् स्वश-

तद्रूपत्वे व्यक्तिबोधकतायाः पदेऽबाधितत्वेनेश्वरेच्छाविषयतया अस्या अपि ऐक्यं दुरपह्नवं, न हि मीमांसकैर्भगवान्नानुमन्यत इत्येतावतैव तादृशयुक्तेरवकाशः तत्साधकबहुतरयुक्तिसत्त्वे न तदुपन्यासेपि निरुत्तरत्वापातात् । एवं ज्ञाने पदानां शक्तिरित्येतन्मतेपि व्यक्तिज्ञानसमर्थस्य पदस्य जाताविव व्यक्तावपि वाच्यत्वं दुरपह्नवमेव । शक्तिनिरूपकज्ञानविषयत्वरूपस्य तस्याविशेषेण जातिव्यक्त्योः सत्त्वादिति चेन्न । व्यक्तिशक्तावस्माकं न वैमत्यमपि तु शक्तिज्ञानत्वेन शक्तिज्ञानहेतुतायामेव । अतएवव्यक्त्यंशे कुब्जशक्तिरिति गीयते तदंशे तज्ज्ञानानपेक्षणात् । अतएव व्यक्तेरवाच्यता । नहि शक्तिधीविषयतामात्रेणैव वाच्यतातादृशविषयताया अन्वयसाधारण्यात् । अपि तु यद्विषयकत्वेन शक्तिज्ञानस्य त-

---

क्तिसाधकत्वादितिपर्यवसितोऽर्थः । ईश्वरेच्छाविषयतयातद्विषयबोधजनकत्वेन ईश्वरेच्छाविषयतया तृतीयार्थोऽभेदः तस्य शक्यत्वेऽन्वयः । अस्यापि, व्यक्तेरपि । तद्बोधकबहुतरयुक्तिसत्त्वे नेति । क्षितिः सकर्तृकाकार्यत्वादित्यादिबहुतरयुक्तिसत्त्वे नेत्यर्थः । तदुपन्यासस्य, ईश्वरोनास्तीत्याद्युपन्यासस्येत्यर्थः । शक्तिज्ञानत्वेन, व्यक्तिविषयकशक्तिज्ञानत्वेन । तदंशेज्ञानानपेक्षणादिति । तदंशे व्यक्त्यंशे । गोपदं गोत्वशक्तं गोत्वज्ञानशक्तं वेत्यादिज्ञानस्य हेतुत्वात् । व्यक्त्यंशे शक्तिज्ञानस्य न शाब्दबोधोपयोग इति भावः । अन्वयसाधारण्याद्, समवायसम्बन्धसाधारण्यात् । यद्विषयकत्वेनेति । यद्व्यक्तिनिष्ठावच्छेदकतानिरूपितविषयत्वनिष्ठावच्छेदकतानिरूपितशक्तिविषयतानिष्ठावच्छेदकताक

द्विषयकशाब्दधीजनकतात्वमेव तद्वाच्यत्वव्यवहार-
नियामकम् । अन्वयांशे कुब्जशक्तिमत्त्वेऽपि यथा त-
द्विषयकत्वं शक्तिज्ञानजनकतायां नावच्छेदकं तथा
व्यक्त्यंशे तत्सत्त्वेऽपि तद्विषयकत्वस्य शक्तिज्ञानजनता-
यामनवच्छेदकत्वान्नव्यक्तौ तद्व्यवहारः। तद्विषयकत्व-
स्य शाब्दधीविशेषणत्वाद्गवादिपदशक्तिज्ञानस्य गो-
त्वादिज्ञानविषतकत्वे नगोत्वादिशाब्दधीहेतुत्वेऽपि न
गवादिपदस्य गोत्वादिज्ञानवाचकतापत्तिः । वस्तुतो
यद्विषयकत्वविशिष्टज्ञानविषयकत्वेन शक्तिज्ञानस्य
शाब्दधीजनकता यद्विषयकत्वेन वा शाब्दधियः श-

तद्विषयकशाब्दधीजनकतातत्वमेव वाच्यताव्यवहारनियामक-
मित्यर्थः। वाच्यताव्यवहारनियामकमिति । गोत्वं गोपदवाच्य-
मितिव्यवहारनियामकं, व्यवहारविषयस्तु गोपदनिरूपितशक्ति-
विषयतानिष्ठा या गोत्वविषयकशाब्दधीजनकतावच्छेदकता-
निरूपितावच्छेदकतातन्निरूपितविषयत्वनिष्ठावच्छेदकतानिरू-
पितावधेयत्वसम्बन्धावच्छिन्नायावच्छेदकता तद्वद्गोत्वमिति ।
व्यवहारः, वाच्यताव्यवहारः, वाच्यत्वव्यवहारनियामकत्वघटक-
शाब्दबुद्धौ अत्र विशेषे तद्विषयकनिवेशव्यावृत्तिमाह । तद्विष-
यकेत्यादिना । गोत्वादिज्ञानविषयकत्वेनेति । शक्तिज्ञानस्ये-
ति पूरणीयम् । गोत्वादिज्ञानवाचकत्वापत्तिः । गोत्वादिज्ञा-
नविषयकशाब्दत्वावच्छिन्नजनकत्वादितिभावः । नचगोत्वादि-
विषयकशाब्दबुद्धिःसमूहालम्बनाद्यात्मकस्यकदाचिदुपेत्यनोक्ता-
पत्तिरिति वाच्यम् । तद्विषयकज्ञाने मुख्यविशेष्यताद्वयशून्यत्व
स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वस्वसमानाधिकर-
णोभयसम्बन्धेन शक्तिविशिष्टशक्तिशून्यत्वस्य वानिवेशनीयत्वा-
त् । लाघवादाह । यद्विषयकत्वेन वेति ।

क्तिज्ञानजन्यतातत्त्वमेव तथा। एतेन ज्ञानत्वज्ञान-
स्यापि ज्ञानपदवाच्यतापत्तिः शक्यज्ञानविषयकत्वेनै-
व ज्ञानपदशक्तिज्ञानस्य ज्ञानत्वज्ञानविषयकशाब्दधी-
जनकत्वादिति परास्तम्। कारणत्वस्य कार्यत्वस्य चा-
वच्छेदकगर्भे गोत्वादिविषयकत्वस्य निवेशाद्गोत्वा-
देर्वाच्यत्वोपपत्तिः। एवं च गौर्गोपदशक्य इत्याकारि-
कापि शाब्दधीर्घोपयोगिशक्तिधीः सम्भवति। व्यक्त्यं-
शे शक्तेरबाधेनान्यथाख्यात्यापत्तिविरहात्तादृशज्ञानस्य
शाब्दधीहेतुत्वेऽपि गोत्वधर्मितावच्छेदकशक्तिज्ञान
त्वेन व्यक्तिविषयतामनन्तर्भाव्यैव गोत्वप्रकारकशा-
ब्दबुद्धौ तथा त्वादुक्तरीत्याव्यक्तेरवाच्यतोपपत्तिः। नचैवं
व्यक्त्यंशे शक्तिज्ञानस्यापेक्षिततया तदंशे शक्तेः कुब्-
जत्वानुपपत्तिरिति वाच्यम्। कार्यकारणभावावच्छे-
दककोटौ व्यक्त्यनन्तर्भावस्यैव तदंशे कुब्जत्वव्यवहा-
रनिर्वाहकत्वात्। अतएव सामान्यलक्षणापूर्वपक्षेम-
णिकृतां समानप्रकारकत्वेन शक्तिधीशाब्दधियोर्हे-
तुहेतुमद्भावाभिधानमपि न विरुध्यते। न च शक्त्यं-
शे गोत्वादिप्रकारकज्ञानस्य गवांशे गोत्वप्रकारकशा-
ब्दबोधहेतुत्वेऽपि कार्यकारणयोः समानप्रकारकत्वस्या-
क्षतत्वान्न विरोध इति वाच्यम्। शक्त्यंशे गोत्वादिप्र-

---

तथा, वाच्यत्वव्यवहारनियामकं शक्यज्ञानविषयकत्वेनैव, ज्ञा-
नत्वेति। ज्ञानपदात् ज्ञानत्वेन ज्ञानमात्रविषयकस्यैव शाब्द-
बोधस्याऽभिप्रेतत्वेज्ञानत्वज्ञानविषयत्वस्य तत्राक्षतेरिति भा-
वः, एवं च, गविशक्तित्वे च, अतएव, गोपदशक्य इत्याकारक-
ज्ञानस्य हेतुत्वादेव

कारकतामादाय समानप्रकारकत्वस्याभिप्रेतत्वेऽपूर्वे- वच्यत इत्यस्यासङ्गत्यापत्तेः । अपूर्ववादे समानप्रकारकाच्छिङ्पदस्य कार्यत्वेन घटादिरूपकार्ये शक्तिज्ञानात्कार्यत्वेनापूर्वविषयकशाब्दबोध इत्येवाभिधानात् । शक्त्यंशे शाब्दबोधीयप्रकारप्रकारकज्ञानस्य हेतुतायास्तत्रानुक्तेः । नचैवं जात्यंशे सामान्यव्यक्त्यंशे स्वरूपसतोहेतुत्वलाघवादिति कुब्जशक्तिवाद इत्यादिचिन्तामणिग्रन्थविरोध इतिवाच्यम् । मतभेदेनोभयग्रन्थसङ्गतेः । वस्तुतस्तु जातिधर्मितावच्छेदककशक्तिज्ञानस्य हेतुत्वे व्यक्तेर्विषयतापि कारणतावच्छेदककोटौ निविशते । विशेष्यतावच्छेदकतात्वेनैव धर्मितावच्छेदकीयविषयता विशेषस्य निवेशनीयत्वात् । अवच्छेदकतानिरूपकविशेष्यताया व्यक्तिविषयतारूपत्वात् । एवं च व्यक्तेरवाच्यताव्यवहारस्य कथञ्चिदुपपादनेपि शक्त्यंशे जातिप्रकारकज्ञानहेतुतापेक्षया गौरवं दुर्वारमेव कारणतावच्छेदकेऽधिकविषयतानिवेशात् । एवं द्रव्यत्वादिधर्मितावच्छेदककप्रमात्मकगवादिपदशक्तिज्ञानाद्द्रव्यत्वादिप्रकारकशाब्दबोधवारणाय शक्त्यंशेधर्मितावच्छेदकावच्छिन्नत्वावगाहित्वस्याप्यधिकस्य निवेश्यतया गौरवमिति व्यक्तौ कुब्जशक्तिवादिनामपि शक्त्यंशे जातिप्रकारकज्ञानहेतुतामतमेव साधीयः । वस्तुतस्तु सर्वत्र लाक्षणिकस्थलेप्यन्वयबोधस्याऽनुभविकत्वेन दुरपन्हवतया लाक्षणिकस्यानुभावकत्वं दुर्वारमेवेति त-

कथञ्चिदुत्पादनेपीति । यद्विषयकशक्तिज्ञानस्येत्युक्तिरित्यादि ।

स्यालक्ष्यार्थे कुब्जशक्तिप्रसङ्ग इति नानुभवजननसामर्थ्यमीश्वरसंकेतो वा वृत्तिरूपाशक्तिः अपि तु पदार्थान्तरमेव साच जाताविव कल्प्यते नतु व्यक्त्यादाविति नतत्र कुब्जशक्तिरपीतितत्त्वम्। अथ व्यक्तेर्गवादिपदावाच्यत्वे गवादिपदाद्व्यक्तेः स्मरणमनुभवो वा न स्यात्। न च पदावाच्यत्वेपि अन्वयस्येव व्यक्तेर्भानंशाब्दबोधेनानुपपन्नमिति वाच्यम्। तद्धर्मप्रकारकशाब्दबोधे तद्धर्मप्रकारकपदार्थोपस्थितेर्हेतुतयागोत्वप्रकारकबुद्धौ गोत्वादिप्रकारकव्यक्तिस्मरणस्यापेक्षणीयतया सम्बन्धग्रहाविषयतया व्यक्तेरस्मरणेव्यक्तेः शाब्दानुभवविषयताया दुरुपपादत्वात्। अन्वयस्य च भाने शाब्दधियोऽन्वयांशे निष्प्रकारकतया तदुपस्थित्यनपेक्षणेन तत्रवाच्यत्वानुपयोगादिति चेत्। अत्र भट्टाः। पदाद्व्यक्तेर्न स्मरणमनुभवो वा किंत्वाक्षेपादेव व्यक्तिधीः, आक्षेपिकाजातिरेव। आक्षेपश्चानुमानमर्थापत्तिर्वा। न च जातिव्यक्त्योर्वैयधिकरण्येनाक्षेपासम्भवः, तादात्म्यसम्बन्धेन जातेराधेयतासम्बन्धेनाक्षेपकतायामविरोधात्। वस्तुतस्तु गामानयेत्यादौ स्वाश्रयवृत्तित्वरूपपरंपरा-

अनुभवजननसामर्थ्यं, शाब्दानुभवजनकतावच्छेदकनिरूपकत्वाश्रयत्वसम्बन्धेनपदादिनिष्ठशक्तिवादादिमतसिद्धातिरिक्तशक्तिरित्यर्थः। आक्षेपकतायामविरोधादिति। ननुतादात्म्यसम्बन्धेन गोरहेतुना आधेयतासम्बन्धेन गोत्वे गोरनुमानसम्भवे गामानयेत्यादौ कर्मत्वादौ आधेयतासम्बन्धेन गवादिबोधस्यानुभवसिद्धस्यानुपपत्तिरत आह। वस्तुतास्त्विति। अर्थापत्तिप्रयोज-

सम्बन्धेनानयनकर्मत्वादौ गोत्वादिजातेरन्वयः शा-
ब्दः तेन सम्बन्धेन गोत्वादिमत्त्वस्याधेयतासम्बन्धे-
नगवादिव्याप्यत्वात् आधेयतासम्बन्धेन गवादिमत्त्वं
विनानुपपद्यमानत्वाच्चानयनकर्मत्वादावाधेयतास-
म्बन्धेन गवादिव्यक्तिप्रकारिकाधीराक्षेपात्। संसर्ग-
घटकतया शाब्दबोधे व्यक्तिभानेपि कर्मत्वाद्यंशे गो-
त्वाद्यवच्छिन्नव्यक्तिप्रकारकभानानुरोधेनाक्षेपादरः।
गोत्वं गवाश्रितं गोनिष्ठभेदप्रतियोगितानवच्छेदक-
धर्मत्वात्, किंचिदाश्रितं वा जातित्वादित्यनुमानतो
व्यक्तिभानं तु न सार्वत्रिकं तादृशहेतूपस्थितेरसार्व-
त्रिकत्वात् गवादिपदात्तादृशरूपेण गोत्वादेरनुपस्थि
तेः। अथ गवादिपदाद्व्यक्तेरस्मरणे गोत्वादिस्मरणमेव
कथमुपपद्यते गोत्वप्रकारकस्मरणे व्यक्तेर्विशेष्यतया
भाननियमात् तद्विशेष्यकस्मरणे च व्यक्तिघटितगो-
त्वत्वादेः प्रकारतया भाननियमात् व्यक्त्यघटितप्र-
कारस्य स्मरणस्य संभवेपि स्वरूपत एव जातेः शक्य-
तया धर्मान्तरविशेष्यतया तत्स्मरणासंभवात्। ध-
र्मान्तरप्रकारेण स्मरणेपि गोत्वाद्यंशे निष्प्रकारकशा-
ब्दज्ञानासंभवेन तादृशस्मृतेरुपयोगित्वाभावाच्चेति

---

कातिव्याप्तिं दर्शयति। गवादिमत्त्वं विनेति। अनुपपद्यमानत्वा-
च्चेति। हेतुत्वं गवादिव्यक्तिप्रकारिकाधीरित्यत्रान्वेति। तादृ-
शरूपेणेति। गोनिष्ठभेदप्रतियोगितानवच्छेदकत्वरूपेणेत्यर्थः। त-
द्विशेष्यकस्मरणेति। गोविशेष्यकस्मरणेत्यर्थः। व्यक्तिघटितगोत्वा-
देरिति। गोत्वत्वस्य गवितरावृत्तित्वे सति सकलगोवृत्तित्वादि-
तिभावः। व्यक्तिघटितप्रकारकस्य, गोत्वनिष्ठविषयत्वादेः,

चेन्न । पदादालोचनरूपस्यैव स्मरणस्योपगमात् किं-
चिद्धर्मावच्छिन्नसंबन्धुग्रपरत्वसम्बन्धज्ञानाधीनतत्सम्ब-
न्धिस्मृतेः सप्रकारकत्वनियमेऽपि निर्विशेषणकसंब-
न्धुग्रपरत्वसंबन्धज्ञानान्निर्विकल्पकस्मरणे बाधकाभा-
वात् । निर्विकल्पकस्य संस्काराजनकत्वेऽपि विशि-
ष्टज्ञानाहितविशिष्टगोचरसंस्काराद्विशेष्यानुद्बोधद-
शायां केवलविशेषणांशस्मरणे न विरोध इतिवद-
न्ति । तदसत् । गवादिपदात्स्वरूपतो गोत्वादिज्ञाने-
ऽपि व्याप्यतावच्छेदकप्रकारेण तद्ग्रहासंभवात्ततो व्य-
प्त्याद्यसंभवात् । न च शाब्दधीविषयपरंपरासं-
बन्धेन गोत्वादिविशेषितकर्मत्वादिहेतुनानयनादौ
गवादिकर्मकत्वमनुमेयमिति वाच्यम् । विशिष्टसा-
ध्यस्य प्रागप्रतीतेः । एवं गौरानीयतामित्यादौ स्वरूप-
त उपस्थितस्य गोत्वादेरेव विशेष्यतया भानोपगमे-
ऽनिर्धर्मितावच्छेदककशाब्दधीस्वीकारापत्तिः तादृश-
बुद्धेः शाब्दे पक्षतावच्छेदकावच्छिन्नाविषयतया व्यक्त्या-
द्यपक्षतानुपयोगितापत्तेश्च । व्यक्तेः शाब्दबोधे वि-
शेष्यादिविधयाभानमावश्यकमित्यवधेयम् । एवं गवा
दावानयनकर्मत्वं सामानाधिकरण्यसम्बन्धेनान्वयन-

---

आलोचनरूपस्यैव, निर्विकल्पकरूपस्यैव, ततः स्मरणस्योपगमादिति, पदादपि निर्विकल्पकमिति तेषां सिद्धान्तादिति भावः । व्याप्यत्वावच्छेदकप्रकारेण, तदग्रहात् । गोत्वाग्रहात् ततो गोत्वादिहेतुतः प्रागनुमितेः पूर्वं, तथा चानुमित्याद्यविशिष्टसाध्यज्ञानाभावात् तद्घटितव्याप्त्यादिज्ञानासम्भवात् कुतोऽनुमितिरिति भावः । दोषान्तरमाह । एवमित्यादिना ।

कर्मत्वविशेषितैनगोत्वादिहेतुनानुमेयं तच्च न संभव-
ति तादृशगोत्वादेरानयनकर्मत्वादिशून्यगवादिसा-
धारण्येन व्यभिचारात्। सामानाधिकरण्यसम्बन्धे-
नानयनकर्मत्वादिविशिष्टस्य विशेषणाव्यभिचारित्वे-
पि साध्यस्यपक्षे संदेहदशायां साध्यविशिष्टस्य हेतोः
पक्षे दुर्निश्चयत्वात्। अतो व्यक्तेः शाब्दबोधे विशे-
ष्यादिविधयाभानमावश्यकमित्यपिबोध्यम्। एतेन
जातिवाचकपदाज्जातिबोधः शाब्दः व्यक्तिबोधस्त्वौ-
पादानिक एवेति श्रीकरमतमनुपादेयम्। उपादान-
स्यार्थापत्तिरूपत्वेन भट्टमताविशेषात्। नच जाति-
रेव व्यक्तिबोधिकाजातिकरणकत्वमेवौपादानिकत्वं
बोधस्येति वाच्यम्। जातेः प्रमाणान्तरताकल्पना-
पेक्षया व्यक्तिशक्तिकल्पनाया एवोचितत्वात्। एवं
जातेर्नित्यतया सर्वदैवतद्धेतुकव्यक्तिभीवारणाय जा-
तिहेतुकव्यक्तिबोधेजातिशक्तिज्ञानघटिततच्छाब्दसा-
मग्र्याः सहकारित्वमवश्यमभ्युपगन्तव्यं तथा च ता-
दृशसामग्र्या एव व्यक्तिभानप्रयोजकत्वसंभवे जातेः
कारणत्वकल्पनमनर्थकम्। नच जातिनिरपेक्षजा-
तिभासकसामग्र्या व्यक्तिभानप्रयोजकत्वेव्यक्तांशेपि
शाब्दत्वमावश्यकं तथा सति च शक्तिज्ञानजन्य-
व्यक्तिस्मृतिरपेक्ष्यते, जातेः करत्वे च व्यक्तांशे औ-
पादानिकत्वमेव नतु शाब्दत्वमिति नतदापेक्षेतिवा-

विशेषणाव्यभिचारित्वेपि, आनयकर्मत्वाव्यभिचारित्वेऽपि, साध्यविशिष्टस्य क्वचित्तथैव पाठः,भट्टमताविशेषादिति। साध्य-व्यतिरेकव्याप्तिविशिष्टहेतुमज्ज्ञानजन्यतया पूर्वोक्तदोषस्यैव जागरूकत्वादिति भावः। न तदापेक्षेतेति। नव.तज्ज्ञानज न्यव्यक्तिमतेरपेक्षाव्यक्तिभानांशे।

च्यम् । व्यक्तिमात्रांशे जातेः प्रकारत्वे तदंशेऽशाब्दत्वो-
पगमसंभवे तदप्रकारत्वेपि तत्संभवात् । जातेरप्रकार-
त्वे व्यक्त्यंशे कीदृशप्रकारस्य जन्यतावच्छेदकाधर्मत्व-
मिति चेत् न कस्यचित्तावत्ताप्रतिविरहात् ॥ व्य
क्तेरपि बोधः शब्दादेव लक्षणा नोपादितः व्यक्तिशाब्द
बोधे शक्तिविरहो नानुपपत्तिं प्रयोजयति लक्षणात
एव तदुपपत्तेरिति मण्डनाचार्यमतम् । तदुक्तम् ।
जातेरस्तित्वनास्तित्वे नहि कश्चिद्विवक्षति । नित्यत्वा-
ल्लक्ष्यमाणायाव्यक्तेस्तेहि विशेषणे इति । अस्तित्वना-
स्तित्वे । उत्पादविनाशौ । लक्षणा च जातिप्रकारेणै-

---

जातेः प्रकारत्वइति । गामानयेत्यादिशब्दात् गोकर्मतानय
नानुकूलकृतिमानित्येवबोधः तत्र गोत्वाद्यंशे जातिप्रकारमौपाद।
निकम्, अत्र गां शृणोमीत्यनुव्यवसायानङ्गीकार एव तदंशेऽशा
ब्दत्वोपगमेतत् प्रयोज्यशाब्दबोधविषयत्वोपरागेणैव शाब्दानुव्य-
वसायात् इति श्रीकरमतं दूषितम् । तदप्रकारत्वेऽपीति, तत्सम्भ
वात्, गांशृणोमीत्यनुव्यवसायानङ्गीकाररूपाशाब्दानुगमसम्भा-
वात् वृत्तिप्रयोज्यविषयत्वोपगमेनैव शाब्दानुव्यवसायस्वीका-
रादितिभावः । ननु जातेरप्रकारत्वे वृत्तिज्ञानजन्यतावच्छेदक-
मेवव्यक्तिविषयकत्वं वाच्यम् तथा च गां शृणोमीत्यनुव्यवसा-
यापत्तिर्दुर्वारैवेति शङ्कते । जातेरप्रकारत्वेऽपीति । व्यक्त्यंशेव्य-
क्त्यंशज्ञाने प्रकारस्यजनकतावच्छेदकव्यक्तिविषयकत्वमित्यर्थः ।
नकस्यचिदिति । अयमभिप्राय । श्रीकरादिमतेति मात्रविषयक-
त्वस्यवृत्तिज्ञानादिजन्यतावच्छेदकत्वेऽपि घटादिशाब्दबोधेता-
दृशशाब्दसामग्रीप्रयोज्यमितिमात्रविषयकत्ववत् व्यक्तिविष-
यकत्वस्य वृत्तिज्ञानजन्यतानवच्छेदकत्वेऽपि तादृशसामग्र्या

व व्यक्तिं बोधयति नतु व्यक्तित्वादिनेति नानुभववि-
रोधः नीलादिपदस्य शक्यनीलादिगुणपुरस्कारेणल-
क्षणया बोधकत्ववच्छक्यजातिपुरस्कारेण लक्षणयाग-
वादिपदस्यव्यक्तिबोधकत्वेऽविरोधात् । स्वार्थान्वयेन
रूपेण ज्ञाने भवति लक्षणेत्यत्र स्वार्थपदस्य शक्यता-
वच्छेदकपरत्वात् । अत्रेदं चिन्त्यम् । गवादिपदाल्ल-
क्षणया गोत्वप्रकारकबोधोपगमे जातिशक्तिरन्वयबो-
धेनापेक्ष्येत लक्ष्यतावच्छेदकताया एव जातिभा-
नेप्रयोजकत्वसंभवात् । नच शक्तिं विना शक्यसम्ब-
न्धरूपलक्षणैव न निर्वहतीति शक्तेरुपयोगितेति वा-
च्यम् । लक्षणानिर्वाहार्थं जातिशक्तिकल्पने गवादि-
पदस्य द्रव्यत्वादावपिविनिगमनाविरहेण शक्तिकल्प-
नाप्रसङ्गात् द्रव्यत्वादिसम्बन्धेनापि गवादौ लक्षणा-
संभवात् । प्रयोगविरहस्यद्रव्यत्वादाविवस्वातन्त्र्येण
गोत्वादावप्यविशिष्टत्वात् । लक्षणाघटकतयाशक्ते-
रुपयोगितायां तस्यावृत्तित्वानुपपत्तेः स्वातन्त्र्येणात-
थात्वात् । अथाकृतिविशिष्टायामेव व्यक्तौ लक्षणा ।
आकृतिप्रकारेण व्यक्तिबोधस्य नैयायिकानामप्यनुम-
तत्वात्तथानुरूपस्यापि तज्जातेरन्वय उपगम्यते । न
चाकृतावेवशक्तिर्जातिविशिष्टे लक्षणेति वैपरीत्यमेव
किं न स्यात् इति वाच्यम् । आकृतेरवयवसंयोगरू-
पाया आनन्त्यात्तदपेक्षया एकस्यां जातावेव शक्ति-
कल्पनौचित्यात् । नचावयवसंयोगनिष्ठजातिरेवश-
क्याव्यक्तौ तदन्वयस्तत्स्वाश्रयघटितपरम्परासम्बन्धेन

---

एव तत्प्रयोजकसम्भवादिति । प्रयोगविरहस्य, शक्त्या प्रयोग,

स्वीक्रियतामिति वाच्यम् । आकृतिप्रकारकबोधस्या-नुभविकत्वात् । लक्ष्यार्थानुपरक्तायां केवलजातौ प्रयोगविरहस्य न शक्त्यभावसाधकः अप्रयोजकत्वादिति प्रयोगमात्रविरहस्यैव तदशक्यत्वे बीजत्वात् जातावप्रयोगस्यासिद्धत्वात्तात्पर्यसत्त्वे च वृत्तिद्वयाधीनबोधोपगमे क्षतिविरहः । नचैव केवलमुख्यार्थतात्पर्येण गवि नित्यत्वमिति स्वारसिकप्रयोगापत्तिरितिवाच्यम् । शक्त्या स्वरूपत उपस्थितायाः जातेः समानपदोपात्तधर्मिण्याश्रयतासंबन्धेनान्वयस्यैव व्युत्पन्नत्वात् । नचान्वयितावच्छेदकरूपेणानुपस्थितायाः जातेरन्वयो विरुध्यते । व्युत्पत्तिवैचित्र्येण प्रकारतया जातेरन्वयस्वीकारे क्षतिविरहादिति रीत्या च तन्मतमेतत्परिष्क्रियते तथापि स्वरूपतो गोत्वाद्यन्वयबोधस्य लक्ष्यार्थे गवादौ स्वीकारे तादृशान्वयबोधं प्रतियोग्यताज्ञानादीनां कारणताकल्पनाधिक्याद्गोत्वादिविशिष्टव्यक्तिशाब्दधीसामग्रीप्रतिबन्धकतायां जातिव्यक्तिविषयकोपस्थितिद्वयस्य निवेशनीयतया प्रतिबन्धकतावच्छेदकशरीरगौरवाच्च जात्याकृतिविशिष्टव्यक्तिशक्तिपक्ष एव साधनीयः । प्राभाकरास्तु जातिशक्तिज्ञानादेव जातिप्रकारेण व्यक्तेः स्मरणं शाब्दबोधश्च नतु निर्विकल्पकरूपं जातिस्मरणं, निर्विकल्पकानभ्युपगमात् । व्यक्तिसंबन्धज्ञानविरहेण तदंशानुद्बोधाद्व्यक्तिस्मरणासंभव इति तु नाशङ्कनीयम् । व्यक्तिमविषयीकृत्य स्वरूपतो गोत्वादिज्ञानासंभवेन गोत्वाद्युद्बोधकस्यैव व्यक्त्युद्बोधक-

त्वात् । तद्बोधकस्यफलबलकल्प्यत्वात् । संबन्धि-
तावच्छेदकहस्तित्वादिसंबन्धाग्रहेपि हस्त्यादिसंबन्धि-
हस्तिपकादिज्ञानात्मकोद्बोधकबलाद्धस्त्यादिस्मरणे
हस्तित्वादेःप्रकारतया भानवद्व्यक्तिसंबन्धज्ञानमन्त-
रेणापि जातिसंबन्धिपदज्ञानाज्जातेः स्मरणेव्यक्तेर्वि-
शेष्यतया भाने विरोधविरहात् तद्धर्मप्रकारकस्मृतौ
तद्धर्मावच्छिन्नसंबन्धितया गृहीतवस्तुज्ञानस्य हेतुता-
यामदृष्टरूपोद्बोधकजनितस्मृतौ व्यभिचारवारणाय
कार्यतावच्छेदकसंकोचस्यावश्यकतया तत एव प्रकृ-
तेर्व्यभिचारानवकाशात् । जातिशक्तिज्ञाने नियम-
तो जातिप्रकारेण व्यक्त्यभानात्तज्जन्यसंस्कारादेव
व्यक्तिस्मरणसंभवान्नियमतो व्यक्तिस्मरणासंभव इति
चेत् । का क्षतिः । व्यक्तिविषयकज्ञानान्तरस्यावश्यक-
तया तज्जन्यसंस्कारादेव व्यक्तिस्मरणसंभवात् । अ-
थ भवतु जातिशक्तपदज्ञानाज्जातिप्रकारेण व्यक्ति-
स्मरणं तथापि तत्प्रकारकशाब्दबोधो न संभवतित-
द्धर्मप्रकारकधर्मिविषयकशाब्दबोधे तद्धर्मप्रकारेण ध-
र्मिगृहीतवृत्तिकपदज्ञानजन्यतद्धर्मप्रकारकव्यक्त्युप-
स्थितेर्हेतुत्वात्पदेगृहीतवृत्तिकत्वमात्रनिवेशे घट-
त्वादिगृहीतवृत्तिकपदे गोत्वाद्यवच्छिन्ननिरूपितसं-
बन्धान्तरावगाहिज्ञानजन्यगोत्वादिप्रकारकस्मरणा-
द्गोत्वादिप्रकारकशाब्दबोधापत्तेः । तद्धर्मगृहीतवृ-
त्तिकत्वनिवेशे पशुत्वादिप्रकारेण धर्मिगृहीतधर्मा-
गृहीतशक्तिकपश्वादिपदात्पशुत्वादिप्रकारकशाब्द-
बोधस्य गुरूणामप्यनुमतस्यानुपपत्तेः नच प्रकारीभूत-

धर्मभेदेन कार्यकारणभावभेदस्य यत्नतस्त्वाननुगमे-
णावश्यकत्वाज्जातिप्रकारकशाब्दबोधे जातिगृही-
तवृत्तिकपदज्ञानजन्यस्मरणस्यैव हेतुत्वमङ्गीकार्यमि-
ति वाच्यम् । एवमपि जातिमल्लाक्षणिकपदज्ञाना-
ज्जातिप्रकारकशाब्दबोधानुपपत्तेर्जागरूकत्वात्ल-
क्षणाज्ञानाधीनपदार्थोपस्थितेर्हेतुत्वान्तरकल्पने च
गौरवात् । नच तन्मतेऽध्याहृतस्यार्थस्य बोधविषय-
तया पदजन्यपदार्थोपस्थितित्वेन हेतुत्वमेव नास्तिका-
यमुक्तानुपपत्त्यवसर इति वाच्यम् । सर्वपदार्थाध्याहृ-
तस्थलेऽन्वयबोधवारणाय तन्मतेपि तादृशहेतुताया
व्यवस्थापितत्वात् । नच तथापि पदज्ञानजन्यपदा-
र्थोपस्थितित्वघटितकारणतावच्छेदकेन जातिमल्ला-
क्षणिकपदजन्यव्यक्त्युपस्थितेरसंग्रहो न दोषा-
य । अध्याहृतपदार्थोपस्थितेनरूपेण हेतुताव्यवस्था-
पितात्लक्ष्यार्थोपस्थितेरपि तद्रूपाक्रान्ततयैवोपपत्तेः
शक्तपदस्यैवानुभावकतेति सिद्धान्तात् । सर्वलाक्षणि-

---

विरहस्यकार्यतावच्छेदकं प्रकृते कार्यतावच्छेदकस्याव्यवहितो-
त्तरत्वघटिततया येनरूपेण हेतुताव्यवस्थापितेति । तद्धर्मप्र-
कारकशाब्दबोधे तद्धर्मावच्छिन्नान्वयितावच्छेदकवृत्तिमत्पदज-
न्योपस्थितिविशिष्टतद्धर्मप्रकारकोपस्थितित्वेनाधेयत्वरूपार्थोप-
स्थितिः श्रीकरादिभिर्व्यवस्थापिता । उपस्थितिवैशिष्ट्यं च स-
मवायघटितप्रत्यासत्त्याबोध्यमिति लक्ष्यार्थोपस्थितिरपि तद्रूपा
क्रान्तता इतिभावः । सर्वलाक्षणिकस्थलेऽप्यन्वयबोधानुरोधात्
शक्तरूपेण लाक्षणिकपदार्थद्वयस्मृत्यादेर्हेतुतासम्भवः किन्तुरू-
पान्तरेणैव तद्रूपसर्वाध्याहारस्थलेपि अध्याहृतपदार्थस्मृतौ स-
त्त्वात् कुतोन सर्वाध्याहारस्थले तेषां युक्तः शाब्दबोध इत्यत
आह । शक्तपदस्यैवेति ।

कस्थलेन्वयबोधानुपगमात् तत्स्थलीयसामग्रीवत्त्वस्य -
र्थाध्याहारस्थलेप्यन्वयबोधापत्तिरिति शङ्कानवकाशा-
दिति वाच्यम् । यत्र गामानयेत्यादिपदाद्गोत्वा-
दिप्रकारकोपस्थितिस्तदव्यवहितोत्तरद्वितीयाविभ -
क्तितः शक्त्या कर्मत्वाद्युपस्थितिस्तत्र कर्मत्वादिवि-
शेष्यको गोत्वाद्यवच्छिन्नप्रकारकः शाब्दबोधः तत्रानु-
मीयमानयोग्यताधीनपदार्थोपस्थितेर्व्यापारात्म-
कोपस्थितिसाधारणरूपमाश्रित्य हेतुतामते आसत्त्या-
द्युपस्थापकविभक्तिप्रकृतिभूतपदत्वादिपदाद्यत्र गो-
त्वाद्यवच्छिन्नोपस्थितिरपि तु निराकाङ्क्षपदान्तरा-
दनुमानादितोऽपि वा तत्राप्यक्षतैवेति तादृशबोधस्य
तत्रापत्तेर्दुर्वारत्वात् । अर्थाध्याहारमतेपि यत्र सा

अर्थाध्याहारमतेपि यत्र साकाङ्क्षपदद्वया-
दिति । न चार्थाध्याहारमतेपि यदि साकाङ्क्षपदजन्यार्थद्वयोप-
स्थितेरपेक्षणीयत्वे अर्थाध्याहारमतपदाध्याहारमतयोः को विशे-
षः पदाध्याहारमतेपि तादृशपदजन्यपदार्थोपस्थितेरेव हेतुत्वा-
दिति वाच्यम् । पदाध्याहारमते द्वारमित्यादि साकाङ्क्षपदा-
व्यवहितोत्तरत्वेन अनुसन्धीयमानेपि पिधेहिपदादिसाकाङ्क्षवा-
क्यघटकत्वेपि धेहि पदजन्यापिधानोपस्थितेरेव शाब्दजनकत्वं
न तु तादृशपदाव्यवहितोत्तरत्वेनानुसंधीयमानतादृशपदजन्य-
स्मृतेरर्थाध्याहारमते तु तादृशस्मृतेरपि शाब्दबोधजनकत्वम-
पि विशेषादिति तथा च तद्धर्मप्रकारकबोधे तद्धर्मगृहीतशक्ति-
कपदजन्यतद्धर्मप्रकारकोपस्थितित्वेन हेतुत्वे तु तयैव अर्थाध्या
हारस्थलेपि शाब्दबोधः, एवञ्च अर्थाध्याहारस्थलेपि शाब्दबोध-
इष्ट एवेति तद्रूपेण लक्ष्यार्थोपस्थितेरहेतुत्वात् । लक्ष्यार्थो-
पस्थितेः स्वातन्त्र्येणाहेतुत्वमेव वाच्यमिति तन्मते गौरवं स्फु-
टमेव ।

काङ्क्षपदान्न प्रकृतवाक्यार्थघटकस्य कस्याप्यर्थस्योप-
स्थितिस्तन्न शाब्दबोधोत्पत्तिरनिष्टत्वादिति चेत् । न ।
शक्तिलक्षणासाधारणस्यानतिप्रसक्तवृत्तित्वस्य दुर्वचत-
या शक्तित्वशक्तिसम्बन्धत्वाभ्यामेव तयोर्निवेशनीयतया
शक्तिलक्षणाधीनपदार्थोपस्थित्याः कारणताभेदस्य व्यक्ति-
शक्तिवादिनामप्यावश्यकतया शक्त्यधीनपदार्थोपस्थि-
तेस्तद्धर्मप्रकारकशक्तिकपदज्ञानजन्यतद्धर्मप्रकारकोप-
स्थितित्वेनैव तद्धर्मप्रकारकशाब्दबोधहेतुतायाः कल्प-
यितुमुचितत्वात् । न च तद्धर्मावच्छिन्नविषयतानिरू-
पितशक्तिविषयताशालिज्ञानत्वेन व्यक्तिशक्तिलक्षणा-
साधारण्योर्व्यक्तिशक्तिवादिमतेनुगमः सम्भवति । गोसम्ब-
न्धिशक्तं पदमित्याकारको पदशक्यसम्बन्धिनी गौरि-
त्याकारको वा लक्षणाग्रहोपि गोत्वावच्छिन्नविषयत-
या समपरम्परयाशक्तिविषयताया निरूप्यनिरूपकभा-
वसत्त्वादिति वाच्यम् । साक्षान्निरूपितत्वपरंपरानि-
रूपितत्वयोरनुगमरूपाभावात् । यत्तु वृत्तिसंसर्गक-
पदप्रकारकज्ञानमेव शाब्दबोधोपयोगि । एवं च श-
क्तिसंसर्गतानिरूपकपदप्रकारतानिरूपिततद्धर्मावच्छि-
न्नविशेष्यताशालिज्ञानत्वेन तद्धर्मावच्छिन्नविशेष्यक-
शक्तिलक्षणाज्ञानयोरेवानुगमः सम्भवत्येव । शक्य-
सम्बन्धेनार्थांशे पदप्रकारकग्रहस्यापि तथात्वात् । सं-
सर्गतावच्छेदकीयविषयितायामपि संसर्गतात्वसत्त्वा-
दिति । तदसत् । शक्तिकालीनत्वादिसम्बन्धावगाहि-
ज्ञानवारणाय पदप्रकारत्वार्थविशेष्यत्वोभयनिरूपि-
तशक्तिनिष्ठसांसर्गिकविषयतानिवेशस्यावश्यकतया

शक्तिसंसर्गकज्ञानसंग्राहकेण रूपेण लक्षणाग्रहासं-
ग्रहात् ॥ अथ धर्मशक्तपदस्य धर्मिस्मरणशाब्दबोध-
जनकत्वे लोमशाद्यात्मकोपाध्यवच्छिन्नबोधकपश्वादि-
पदस्यापि धर्मिशक्तिर्विलीयतां युक्तेःसाम्यात् । न
च निर्विकल्पकरूपस्मरणस्य शाब्दबोधस्य चानभ्युप-
गमाज्जातिवाचकपदाद्व्यक्तिविषयकस्मरणाद्यसम्भवे-
न तस्य व्यक्तिस्मरणादिजनकत्वं, धर्म्यंविषयकस्या-
पि लोमत्वाद्यवच्छिन्नविषयकस्य स्मरणादेःसम्भवा-
त् । पश्वादिपदस्य लोमत्वाद्यवच्छिन्नवाचकत्वोपग-
मेन धर्मिधीः सम्भवतीति तस्य धर्मिवाचकतेति वा-
च्यम् । उपाधेर्धर्मिविनिर्मोकेण भानसम्भवरूपस्य जा-
त्यपेक्षया विशेषस्य सत्त्वेऽपि जातिशक्तपदज्ञानस्य जा-
तिप्रकारिकायामिवोपाधिशक्तपदज्ञानस्याप्युपाधि-
प्रकारकधर्मिविषयकबुद्धौ कारणताकल्पने बाधकाभा-
वात् उपाधिमात्रशक्तादपि धर्मिधीसम्भवादिति चे-
न्न । लोमत्वाद्यवच्छिन्नसम्बन्धान्तरवत्तया गृहीतात्प-
श्वादिपदाल्लोमत्वादिना लोमादिमुख्यविशेष्यकस्यैव
स्मरणस्य धर्मिस्मरणोद्बोधकान्तरविरहदशायामुत्पा-
ददर्शनात्तद्रूपावच्छिन्नशक्तत्वेन गृहीतात्पदादपि त-
द्रूपावच्छिन्नमुख्यविशेष्यकस्मरणोत्पादस्यानुभविक-
त्वात्तत्तद्धर्मावच्छिन्नप्रकारकधर्मिस्मरणस्य नियतम-
तः स्वीकारासम्भवाल्लोमादिमात्रशक्तत्वेन गृहीता-
त्पदान्नियमतस्तत्प्रकारकशाब्दबोधानिर्वाहाद्विशे-
षितगोत्वादेः सम्बन्धान्तरज्ञानादपि तत्प्रकारकध-
र्मिस्मरणस्यैवोपगमेन तत्र तादृशशक्तिज्ञानान्नियम-

तत्तत्प्रकारकधर्मिस्मरणोपगमेऽनुभवविरोधाभावात् । अनिष्टापत्तेरपि सुकरत्वेन प्रतिबन्द्यादिनिवर्तकत्वायोगाच्च । अथ गवादिपदस्य समवायेन गोत्वादिविशिष्टवाचकत्वानुपगमे तज्जन्यबोधे गोत्वादेः समवाय एव संसर्गतया भासते न तु सम्बन्धान्तरमित्यत्र किं नियामकं नहि जातिर्व्यक्तिं विना न भासत इतिवत्समवायं विना न भासत इत्यपि नियमः येन शक्तिज्ञानजन्यबोधे समवायभानस्यावश्यकता न तु सम्बन्धान्तरभानमिति स्यात् । तदादिपदात्समवायमविवक्षीकृत्यापि सम्बन्धान्तरेण गोत्वादिविशिष्टविषयकबोधोदयादिति चेदेवं सति ज्ञानशक्तिरेवादरणीया । तथा च गवादिपदस्य समवायेन गोत्वादिप्रकारकज्ञान एव शक्त्युपगमात्तेन नाभ्रान्तानां सम्बन्धान्तरेण तत्प्रकारकधीः तत्सम्बन्धेन तत्प्रकारकज्ञानशक्तिग्रहस्यैव तादृशबोधहेतुत्वमिति वाच्यानन्तर्भावस्य समवायसाधारण्येन सम्बन्धान्तरभानप्रयोजकत्वासम्भवादिति कृतं पल्लवितेन ॥ इति श्रीमत्समस्तविद्वन्मुकुटन्यायसिद्धान्तवागीशगदाधरभट्टाचार्यविरचितः शक्तिविचारः समाप्तः ॥ शं भवतु ॥

---

शक्तिग्रहस्यैवेति । समवायसंबन्धेन गोत्वप्रकारकज्ञानाशक्तं पदमित्याकारकज्ञानस्यैवेत्यर्थः । तादृशबोधहेतुत्वात् । समवायसंबंधेन गोत्वप्रकारकशाब्दबोधहेतुत्वादित्यर्थः । इति संक्षेपतः श्रीमाधवशर्म्मविरचिता शक्तिवादटीका समाप्ता ॥